THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

No. 30

---

THE

# PADĀRTHA MAṆḌANA

---

GOVERNMENT SANSKRIT LIBRARY

BENARES

1930



Price, As. 14.]

THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

*No. 30.*

—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA

---

THE

# PADĀRTHA MAṆḌANA



*Printed by Jai Krishna Das Gupta*
*At the Vidya Vilas Press, Gopal Mandir Lane,*
*Benares City.*

---

1930

# पदार्थमण्डनम्

श्रीवेणीदत्त विरचिता ।

काशिकराजकीयप्रधानसंस्कृतपाठशालायां व्याकरण-
धर्मशास्त्राध्यापकेन नेने इत्युपाख्य पं० गोपाल-
शास्त्रिणा सम्पादिता ।

THE

# PADĀRTHA MAṆḌANAM

By

SRĪ VEṆĪDATTA

EDITED WITH INTRODUCTION ETC.

By

PANDIT GOPĀLA S'ĀSTRĪ NENE,
Professor, Govt. Sanskrit College,
BENARES.

1930

# भूमिका ।

अथोपक्रम्यते श्रीवेणीदत्तविरचितं पदार्थमण्डनाख्यं पुस्तकमिदं प्रकाशयितुम् । पुस्तकेऽस्मिन् प्रायशः श्रीरघुनाथशिरोमणिभिः स्वकृतपदार्थतत्त्वनिरूपणाख्ये ग्रन्थरत्ने खण्डितानां वैशेषिकमतप्रसिद्धानां पदार्थानां युक्तिभिः पुनः संस्थाप्य मण्डनं कृतमस्तीत्यन्वर्थमिदमस्य 'पदार्थमण्डनं' नामधेयमिति ।

अनेन ग्रन्थकृता हि पञ्च पदार्थाः स्वीकृताः । ते च द्रव्यगुणकर्मधर्माऽभावाः । तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव । गुणा एकोनविंशतिप्रकारा रूपरसगन्धस्पर्शपरिमाणसंयोगविभागगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नादृष्टसंस्कारा इति । कर्म गमनाख्यमेकमेव । धर्मास्तु संख्यासामान्यविशेषवैशिष्ट्यविषयताकारणत्वकार्यत्वस्वत्वशक्तिरूपाः । अभावस्तु संसर्गाभावोऽन्योन्याभावभेदेन द्विविधः ।

अत्र यद्यपि दिक्कालयोरीश्वरानतिरिक्तत्वं, प्राच्यादिव्यवहारस्तु तत्तदुपाधिविशेषादेव; एवमाकाशस्यापि, ईश्वर एव शब्दसमवायिकारणत्वाभ्युपगमादिति शिरोमणिमहाशयैः दिक्कालाकाशानां खण्डनं कृतं; तथापि चैत्रमैत्रादिभेदस्यापि तत्तदुपाधिभेदेनैवोपपत्तौ अनन्तजीवानामनङ्गीकारप्रसङ्गेन तत्तद्गन्धरसाद्युपाधिभेदादीश्वरादेव पृथिव्यादिव्यवहारसम्भवे पृथिव्यादीनामपि ईश्वरेऽन्तर्भावप्रसङ्गात् दिक्कालयोरीश्वरातिरिक्तत्वम्; ईश्वरस्य निमित्तकारणत्वेन समवायिकारणत्वासम्भवात् जीवस्यैव वा समवायिकारणत्वस्वीकारेण विनिगमनाविरहाच्च आकाशस्यातिरिक्तत्वं च साधितम् । मनसोऽसमवेतभूतत्वमदृष्टविशेषस्यातिप्रसङ्गनियामकत्वञ्च स्वीकृत्य खण्डितं मनः अनित्यत्वप्रसङ्गभिया त्रुटिरूपत्वासम्भवेन परमाणुरूपत्वे च पार्थिवाद्यणुभिर्विनिगमनाविरहेण

समर्थितम् । एवञ्च ग्रन्थकृन्मते नव द्रव्याणि सिद्ध्यन्ति । एवं परमाणुद्व्यणुकावपि अनुमानेन समर्थितौ । आत्मनःपरिमाणवत्त्वमपि ग्रन्थकृदभिमतम् "एषोऽणुरात्मा चेतसा वेदितव्यः" "अणोरणीयान् महतो महीयान्" इत्यादिश्रुतिभिरित्याकलनीयम् ।

गुणास्तावत् पृथक्त्वपरत्वापरत्वसंख्यारूपाश्चत्वारः शिरोमणिमहाशयानभिमता ग्रन्थकृतोऽप्यनभिमताः। धर्माधर्मौ यद्यपि ग्रन्थकृता नादृष्टरूपतया क्वाचिद् विवृतौ नापि कश्चित् पञ्चमो गुणो निराकृतः तथापि अन्ते 'गुणास्त्वेकोनविंशतिप्रकाराः' इति तदुक्त्या धर्माधर्मयोरदृष्टत्वेनैकविधत्वं ग्रन्थकृदभिमतमित्युन्नीयते । रूपरसगन्धस्पर्शानामव्याप्यवृत्तित्वमुभयोरपि समानम् । केवलं चित्ररूपं शिरोमणिमहाशयैः समानाधिकरणविजातीयरूपसमुदायादेव 'चित्रम्' इति व्यवहारोपपत्तेः नीलादेः नीलाद्यतिरिक्तरूपाजनकत्वाच्चेति हेतुद्वयेन खण्डितं विजातीयनानारूपवदवयवारब्धे घटादावव्याप्यवृत्तिनानारूपाङ्गीकारे नीलाद्यवयवावच्छेदेन पीतादिवारणाय अवच्छेदकतासम्बन्धेन पीतादिकं प्रति स्वसमवायसम्बन्धेन पीतादीनां षडभावाभावकारणस्वीकारगौरवेण समर्थितम् । एवं चित्ररसश्चित्रगन्धोऽपि समर्थितः । गुणत्वजातिस्तु तुरगादिगतोत्कृष्टगत्यादौ गुणव्यवहारवद्रूपादिष्वपि उत्कर्षमादायैव तद्व्यवहारोपपत्तौ रूपादिचतुर्विंशतिसाधारणव्यवहाराभावेन तदसिद्ध्या खण्डिता गुणपदशक्यतावच्छेदकतया समर्थिता ।

कर्म तु गमनाख्यमेकमेवोत्क्षेपणादीनां तत्रैवान्तर्भावात् । कर्मणोऽव्याप्यवृत्तित्वं तूभयोः समानम् ।

सामान्यविषयेऽप्युभयोरैकमत्यम् । सत्ताऽनुभवत्वयोर्जातित्वमुभाभ्यामपि नाङ्गीक्रियते इति तत्राप्यविशेषः । अनुभवत्वमपि न जातिः किन्तु प्रत्यक्षत्वमेवेति । मूर्तत्वं भूतत्वं च यद्यपि शिरोमणिमते मनआकाशयोरतिरिक्तत्वाभावेनैकं, ग्रन्थकर्तृमते च तयोरतिरिक्तत्वेन

पृथक् , तथापि तयोर्जातित्वाभावे ऐकमत्यमेव तुल्यत्वसाङ्कर्ययोः क्रमेण तत्र जातिबाधकत्वात् ।

विशेषपदार्थस्तु नित्यानामेव पदार्थानां स्वतोऽव्यावृत्तत्वाङ्गीकारेण निराकृतस्तदभावे विशेषपदस्य प्रातिपदिकत्वासङ्गत्यापत्त्या समर्थितः । शशशृङ्गादिपदानां तु वाक्यतुल्यत्वेन वैषम्यमिति च तत्रैव निरूपितम् ।

समवायस्य नानात्वमुभयसंमतम् । अन्यथा जलादेरपि गन्धवत्वाप्रसङ्गादिति । तथाच तत्तत्स्वरूपविशेष एव तत्र तत्र सम्बन्ध इति नातिरिक्तः समवायपदार्थ इति ।

सामान्यविशेषयोर्धर्मपदेन ग्रहणम् । यद्यप्येताभ्यां संख्यावैशिष्ट्यविषयताकार्यत्वकारणत्वशक्तिस्वत्वानामतिरिक्तपदार्थत्वमभ्युपगतं तथापि तेषामपि धर्मरूपतया तत्रैवान्तर्भावो बोध्यः ।

अभावस्तु द्विविध इत्युक्तम् । तत्र संसर्गाध्वंसाभावात्यन्ताभावभेदेन द्विविधः । प्रागभावस्तूभाभ्यामपि न मन्यते । अन्योन्याभावस्तूभयसंमतः । तत्र अभावाभावस्य न प्रतियोगि-भाव-स्वरूपत्वं, घटादिमति भूतलादौ 'घटादिर्नास्ति' इत्यभावप्रतीतेरनुभवसिद्धत्वात् । तदभावस्य तु प्रथमाभावरूपता, न तु तदतिरिक्तत्वमनवस्थापातादित्यप्युभयसंमतमेवेत्यादि ग्रन्थे स्पष्टम् । एवञ्चैतत्संमता द्रव्यगुणकर्मधर्माभावाः पञ्च पदार्था इति सिद्धम् । अत एव 'न पदार्थान्तरमिति द्रव्यादिपञ्चभिन्नपदार्थनिषेधः' इति विशेषनिरूपणावसरे तदुक्तिः ( पृ० १२ पं० १९ ) ।

एवञ्च रघुनाथशिरोमणिकृतं केषाञ्चित्पदार्थानां खण्डनमपि ग्रन्थकर्तुरभिमतमेव । सर्वथा श्रुतिसूत्राविरुद्धपदार्थखण्डनं तत्कृतं नानुमन्यते इति तात्पर्यम् । तथाचोक्तं ग्रन्थान्ते तेनैव —

श्रुतिसूत्रविरुद्धानां खण्डनं स्वीकरोम्यहम् ।
मण्डनं त्वविरुद्धानां पदार्थानां मतं मम ॥ इति ।

अथास्य ग्रन्थरत्नस्य रचयिता कस्मिन् देशे कस्मिन् वंशे कदा

च समुत्पन्नः कियन्तश्चानेन निबन्धा रचिता इति प्रकृतग्रन्थपरिशीलितात्मनो जिज्ञासाया अपनोदकं तदीयमैतिह्यमेव भवितुमर्हति । तच्च काशिकराजकीयप्रधानसंस्कृतपाठशालीयपुस्तकालये सरस्वतीभवनाभिधेऽचिरादेव सङ्गृहीतात्तत्र भवतः सुगृहीतनामधेयस्य तदानीन्तनविद्वत्कुलललामभूतस्य महामहिमशालिनः साक्षान्महीधरस्यैव विदुषः पुस्तकसङ्ग्रहात्तथा पुस्तकान्तरेभ्यश्चोपलब्धमित्थम् । श्रीमान् महीधरो महीदासापराभिधः शुल्बसूत्रव्याख्या, चरणव्यूह, मन्त्रमहोदधि,वाजसनेयिसंहितामहाभाष्याद्यनेकग्रन्थकर्ता गुर्जरदेशान्तर्गताहिच्छत्रदेशे समुत्पन्नो नरसिंहोपासको वत्सगोत्रो रत्नाकरात्मज–रामभक्त–फनूभट्टपुत्रो बालतन्त्रप्रणेतृकल्याणजनकः संसारासारतां विदन् वाराणसीमागत्य काशीवासं कुर्वन् मन्त्रमहोदध्यादिग्रन्थानरचत् इति मन्त्रमहोदधौ वर्तते । यथा—

अहिच्छत्रद्विजच्छत्रवत्सगोत्रसमुद्भवः ।
आसीद्रत्नाकरो नाम विद्वान् ख्यातो धरातले ॥
तत्तनुजो रामभक्तः फनूभट्टाभिधोऽभवत् ।
महीधरस्तदुत्पन्नः संसारासारतां विदन् ॥
निजदेशं परित्यज्य गतो वाराणसीं पुरीम् ।
सेवमानो नरहरिं तन्त्रग्रन्थमिमं व्यधात् ॥ इति ॥

अस्य स्थितिसमयश्च १६१३ वैक्रमसंवत्सरे चरणव्यूहव्याख्यायाः १६४५ संवत्सरे मन्त्रमहोदधेश्च रचनया, १६५२ वैक्रमसंवत्सरे तद्धस्तलिखितस्य दारिद्र्यहरधनदमूर्तिदानाविधिपुस्तकस्य दर्शनेन सप्तदशशताब्द्याः प्रारम्भावधिचतुर्थपादपर्यन्तमासीदित्यवसीयते । अयं खलु पिशनौरानागरजातीयो ब्राह्मण आसीदिति प्रसिद्धम् । अनेन च आश्वलायनशिष्यपरम्परायां वर्तमानाद् बालकृष्णाभिधाद्विद्वद्वराद्विद्याऽधिगतेति चरणव्यूहव्याख्याप्रारम्भे स्पष्टम् । यथा--

कृष्णद्वैपायनं वन्दे गुरुं वेदमहानिधिम् ।
येन चरणव्यूहेषु शाखाभेदमितं कृतम् ॥
तच्छिष्यं शौनकगुरुं वेदज्ञं लोकविश्रुतम् ।
नत्वा तु शाकलाचार्यं तथैव चाश्वलायनम् ॥
एवं परम्पराप्राप्तं बालकृष्णं महागुरुम् ।
यस्य प्रसादाद् व्याख्यामि चरणव्यूहसंज्ञकम् ॥ इति ।

तदेवं प्रसिद्धस्य विद्वद्वरस्य महीधरस्य पुत्रः कल्याणस्तत्पुत्रो रामानुजो लक्ष्मणः १६७८ वैक्रमसंवत्सरे स्वपितामहरचितस्य 'अनादिदीप' टीका–विवरणस्य प्रतिलिपिलेखकस्तस्य पुत्रो भट्टवीरेश्वरस्तस्य पुत्रः सुगृहीतनामधेयस्तर्कवागीशभट्टाचार्य–तर्कधुरन्धर–आदिविरुदावलिविराजितस्तत्र भवान् प्रकृतग्रन्थकर्ता वेणीदत्त आसीत् । ग्रन्थकर्तुः पुत्रश्च कृष्णदत्त आसीदिति तद्धस्तलिखितब्रह्मवैवर्तपुराणादिपुस्तकावलोकनेन निश्चीयते । अस्य समयस्तु––

इन्दुबाणोदधिब्रह्मसंवत्सरमहोदये ।
ग्रन्थः समाप्तिमगमद्भाद्रशुक्ले हरेर्दिने ॥

इति श्लोकेन १७५१ वैक्रमसंवत्सरेऽस्य ग्रन्थस्य, एवं ततः पूर्वं १७५० संवत्सरे तर्कधुन्धध्वंसनस्य ग्रन्थस्य रचनयाऽष्टादशशताब्द्या मध्यमो भाग आसीदिति निश्चीयते । अनेन विदुषा बहवो ग्रन्था विरचितास्तेषु सम्प्रति मयोपलब्धास्त्वेते––

१ अलङ्कारचन्द्रोदयः,
२ पदार्थमण्डनम्,
३ मुक्तिविमर्शः,
४ *परामर्शविमर्शः,
५ *तर्कधुन्धध्वंसनम्,

---

* १७५० वैक्रमे वत्सरे ग्रन्थकृद्धस्तलिखिताविमौ ।

६ न्यायसिद्धान्तरक्षामणिः,
७ अन्नपूर्णाष्टकस्तोत्रम् ,
८ तर्कसमयखण्डनम्,
९ †भेदजयश्रीः,
१० निर्विकल्पभङ्गः,
११ †युक्तिवरूथिनी विपक्षविक्षेपव्याख्या,
१२ आस्वादसुन्दरप्रकरणम्,
१३ न्यायामृततरङ्गिणीकण्टकोद्धारः ।

एतद्ग्रन्थमुद्रणाधारभूतं पुस्तकमेकमेवोपलब्धम् । तच्चास्मत्सुहृद्वर-खिस्ते-श्रीनारायणशास्त्रिभ्यः सरस्वतीभवनपुस्तकालयोपाध्यक्षेभ्यः शुद्धप्रायमवाप्तमिति तान् प्रति अनेकशो धन्यवादान् वितरामः । अत्र पत्राणि ?.३ सन्ति । प्रतिपत्रं प्रायः १४ पङ्क्तयः, पङ्क्तिषु च प्रायः ५० अक्षराणि वर्तन्ते ।

सम्प्रति काशिकराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षान् तत्र भवतः सुगृहीतनामधेयान् एम्० ए० कविराज-गोपीनाथमहोदयाननेकशो धन्यवादपुरःसरमभिनन्दामो यैरेतद्ग्रन्थसम्पादनार्थं मां प्रवर्त्य स्वामूल्यसमयव्ययमूरीकृत्य ग्रन्थकर्तृवंशसमयादिपरिज्ञानाय समुचितं साहाय्यमाचरितम् । अन्ते चास्मच्छ्रद्धेयेषु अनन्यशरणेषु म० म० श्रीनित्यानन्दपन्तपर्वतीयचरणकमलेषु सादरं प्रणम्य श्रीकाशीविश्वेश्वरं प्रार्थये दोषदृष्टिमपहाय गुणैकपक्षपातिनो विचाररसिका बुधवराः परां प्रीतिमावहन्तु ग्रन्थस्यास्यावलोकनेनेति ।

गवर्न्मेण्ट संस्कृत कालिज
बनारस
मकरसंक्रमणम् सं० १९८६.

गोपाल शास्त्री नेने

---

† इमौ च मध्वसिद्धान्तानुसारिणौ ग्रन्थौ ।

# वंशवृक्षः



रत्नाकर
फनूभट्ट
महीधर १६१३—१६५३
कल्याण
राम
लक्ष्मण ( १६७८ )
वीरेश्वर
वेणीदत्त १७५०
कृष्णदत्त १७५०–१७७८

॥ श्रीहरये नमः ॥

वेणीदत्तविरचितं

# पदार्थमण्डनम् ।

ॐ नमः श्रीहरये पराय परमात्मने ।
गोविन्दगोकुलेशाय वृन्दावनविहारिणे ॥ १ ॥
मातरं दधिविमन्थनादरां वीक्ष्य नन्दतनयस्य हृष्यतः ।
श्रीहरेः स्फुरदतीवचञ्चला दारयन्तु दुरितं दृगञ्चलाः ॥२॥
श्रुतिस्मृतिविरुद्धं यत्पदार्थखण्डनं कृतम् ।
कुर्वे तेषां पदार्थानां मण्डनं श्रुतिसम्मतम् ॥ ३ ॥

यत्तु तत्र दिक्कालौ नेश्वरादतिरिच्येते, मानाभावात् । अत्र दिक्त्वादि पक्षतावच्छेदकीकृत्यातिरिक्तत्वाभावसाधने न सिद्ध्यसिद्धिव्याघातः,'पूर्वस्यां दिशि घटः' 'इदानीं घटः' इत्यादिप्रतीतिविषयीभूतविभुत्वस्यैव दिक्त्वादिरूपत्वात् । विभुत्वं च मूर्तेतरद्रव्यत्वं, न तु परममहत्परिमाणरूपम्; ईश्वरात्मनि तस्य निराकरिष्यमाणत्वेन विभुत्वाभावापत्तेरिति ।

तच्चिन्त्यम् , दिक्कालयोरतिरिक्तत्वानभ्युपगमे 'पूर्वस्यां घटः' 'इदानीं घटः' इत्याद्यनुगतप्रत्ययानुपपत्तेः । न चेश्वरादेव तथाप्रत्ययनिर्वाहः, उपदर्शितप्रतीतीनां वैलक्षण्यानुपपत्तेः, ईश्वरस्यैकत्वात् । नच यथा तत्तदुपाधिभेदात्'प्राच्यां

घटः' 'प्रतीच्यां घटः' 'इदानीं घटः' 'तदानीं घटः' इत्यादिप्रतीतिवैलक्षण्यं, तथा मन्मते तत्तदुपाधिभेदादीश्वरादेव प्रतीतिवैलक्षण्यमिति वाच्यम्, अहं चैत्रोऽयं मैत्रोऽसौ देवदत्त इत्यादिप्रतीतीनामपि तत्तदुपाधिभेदेनेश्वरादेव वैलक्षण्यसंभवे विभुजीवात्मनामनङ्गीकारप्रसङ्गात्; जीवबहुत्वानङ्गीकारप्रसङ्गाच्च, तत्तदुपाधिभेदनैकस्मादेव ज्ञानवतः प्रतीतिवैलक्षण्यसम्भवात्; 'इमा दिशः' 'स एष संवत्सरः' 'इदमाकाशम्' इति श्रुतेः प्रमाणत्वाद्धेत्व(१)सिद्धेश्च । परस्परं दिगादिभिर्विनिग(२)मनाविरहाच्च ।

केचित्तु आकाशस्यैव दिग्व्यवहारजनकत्वम्, "दिशः श्रोत्रम्" इति श्रुतेरित्याहुः । एवं तत्तद्गन्धरसाद्युपाधिभेदादीश्वरादेव पृथिव्यादिव्यवहारसम्भवे तेषामपीश्वरेऽन्तर्भावप्रसङ्गात्। यदि भावकार्यस्य समवायिकारणजन्यत्वनियमाद्गन्धादिसमवायितयाऽतिरिक्तपृथिव्यादिसिद्धिस्तर्हि परत्वापरत्वाद्यसमवायिकारणसंयोगाश्रयतयाऽतिरिक्तदिगादिसिद्धिः कुतो नोच्यते, अवैषम्यात्?

मनसो महती बुद्धिर्बुद्धेः कालो महान् स्मृतः ।
कालात्स भगवान विष्णुर्यस्य सर्वमिदं जगत् ॥

---

(१) 'मानाभावात्' इति यो हेतुर्दिक्कालयोरीश्वरानतिरिक्तत्वे दत्तस्तस्यासिद्धेरित्यर्थः ।

(२) दिक्कालावीश्वरानतिरिक्तौ, ईश्वरदिशावेव कालानतिरिक्ते, ईश्वरकालावेव दिशोऽनतिरिक्तौ वा इत्यत्र नियामकाभाव इत्यर्थः।

कालोऽयं द्विपरार्द्धाख्यो निमेष उपचर्यते ।
अव्याकृतस्यानन्तस्यानादेर्जगदात्मनः ॥

इत्यागमेन 'इदानीं' 'तदानीं' प्रतीतिविषयद्विपरार्द्धाख्यकालस्य ईश्वरभिन्नस्योक्तेश्च "सत्यमित्यविनाशि, देशकालवस्तुनिमित्तेषु विनश्यत्सु स्वयमेव न विनश्यति" ( सर्वो० सा० ३ ) इति भेदोक्तेश्च । परममहत्त्वरूपमेव विभुत्वम् "अणोरणीयान्महतो महीयान्" इत्यादिश्रुत्या आत्मनि परिमाणसद्भावप्रतिपादनात् ।

शब्दसमवायितया अतिरिक्ताकाशसिद्धिः । नचेश्वरस्यैव शब्दसमवायित्वं, तस्य निमित्तकारणत्वात् । निमित्तकारणत्वसमवायिकारणत्वयोस्तर्कमते विरोधात् । अन्यथा कार्यमात्रं प्रति निमित्तकारणत्वेनेश्वरे कार्यसमवायित्वस्यापि वक्तुं शक्यत्वेन त्वदीयप्रक्रियामात्रभङ्गापत्तेः; "ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्" "न पुरुषकर्माभावे फलानिष्पत्तेः" "तत्कारित्वादहेतुः" ( गौ०सू०४–१–१९–२०,२१ ) इत्यादिगौतमसूत्रैः कारणत्वमात्रोक्तेः; चतुर्विंशतिगुणसमवायित्वेनेश्वरस्वी(१) कारे विकारापत्तेः; "आत्मन आकाशः सम्भूतः" (तै० २–१–१) इति विभागशक्तपञ्चम्यनुपपत्तेश्च, ईश्वरात्मन एवाकाशत्वाद् ऐक्ये विभागासम्भवात्, तस्य संयोगवद् द्विनिष्ठत्वात्, सम्पूर्वकभूधातोरुत्पत्तावेव प्रयोगदर्शनात् । तथाहि, 'सम्भूतं प्रथममहेश्वरस्य सङ्गान्मायायां मनः' इति 'कुमारसम्भवः' इति च व्यव-

---

( १ ) ईश्वरे चतुर्विंशतिगुणसमवायित्वस्वीकारे इत्यर्थः ।

हाराः। (१)प्रत्येकं जीवमादाय विनिगमनाविरहाच्च।

यत्तु जन्यमात्रं प्रति ईश्वरस्य कारणतायाः क्लृप्तत्वात् तत्र समवायित्वमात्रकल्पनमेव(२), जीवानां तु (३)द्वयोस्तयोः कल्पनमिति गौरवमिति।

तत्तुच्छम्, अदृष्टद्वारा जीवस्यापि हेतुत्वसिद्धेः समवायित्वमात्रकल्पनात्। नचादृष्टस्य जनकत्वे (४)तदाश्रयतथात्वे मानाभाव इति वाच्यम्, ईश्वरस्यापि अदृष्टद्वारैव जनकत्वात्। अन्यथा वैषम्यनैर्घृण्यप्रसङ्गात्। नचास्मदादेश्च शब्दसमवायिकारणत्वे 'सुखादिमान' इतिवत् 'अहं शब्दवान्' इत्यादिप्रतीत्यापत्तिरिति वाच्यम्, (५)तस्य मनसोऽयोग्यत्वात्। (६)तस्य श्रवणेन्द्रियग्राह्यत्वात्। नहि सुखादि इतरेन्द्रियग्राह्यमिति भवति मनोयोग्यम्। अन्यथा रूपादेरपि मनोयोग्यतापत्तेः। शब्दस्य

---

(१) अयं हेतुः नच ईश्वरस्यैव शब्दसमवायित्वमित्यत्र बोध्यः। अयं भावः—ईश्वरस्य शब्दसमवायित्वस्वीकारेणातिरिक्ताकाशनिरासे जीवस्यापि शब्दसमवायित्वस्वीकारेण तन्निरासः कुतो नेति विनिगमनाविरहः। नच जीवानामानन्त्यमेव विनिगमकमिति वाच्यम्, प्रत्येकं जीवमादाय विनिगमनाविरहसम्भवादिति।

(२) अस्य 'ईश्वरस्य शब्दसमवायिकारणत्वे विनिगमकम्' इति शेषः।

(३) कारणत्वसमवायित्वयोः।

(४) अदृष्टाश्रयस्य जीवस्य तथात्वे कारणत्वे इत्यर्थः।

(५) शब्दस्य।

(६) इतरेन्द्रियाग्राह्यत्वमेव हि मनोयोग्यत्वम् तच्च न शब्दे इत्याह—तस्येति। तदेवोपपादयति—नहीत्यादिना।

परोक्षतापाताच्च(१)। यदि कर्णविवरावच्छिन्नेश्वर एव श्रोत्रमिति तद्गृहीतस्य शब्दस्य श्रावणत्वं, तर्हि तदवच्छिन्नजीवरूपश्रवणेन्द्रियगृहीतस्य न मानसत्वमिति साम्यात्। आत्मनोऽतीन्द्रियत्वात्। "इन्द्रियेभ्यः पर" इत्यादिश्रुत्या इन्द्रियत्वस्यात्मनि निषेधात्। लाघवेन प्रामाणिकपदार्थापलापे इहलोकस्यैव सिद्धौ लोकान्तरकल्पनानुपपत्तेरिति दिगादिसमर्थनम्।

यत्तु मनोऽपि चासमवेतमूर्तम्। तच्च परमाणुरूपमिति प्राञ्चः। (२)त्रुटिरूपमिति नव्याः। अत्र मनसोऽसमवे(३)तमूर्तपर्यन्तानुधावनं तस्य सूक्ष्मत्वासिद्धान्तरक्षार्थम्। ननु मनसः पार्थिवाद्यणुरूपत्वे चक्षुःसंयोगत्वक्संयोगादिसत्त्वे एकदा ज्ञानयौगपद्यापत्तिः। नवीनमते मनसः पार्थिवादित्रसरेणुरूपतया महत्त्वेन तेन सहैकदा चक्षुरादिमनोयोगतया ज्ञानयौगपद्यापत्तिश्चेति चेत्? न, अतिरिक्तमनोऽङ्गीकर्तॄणां यदा मनसा सह चक्षुःसंयोगस्तदा त्वचा सह संयोगः कुतो नेत्यत्रादृष्टविशेषस्यैव नियामकत्वेऽनुपपत्त्यभावो यथा, तथा मन्मतेऽपि तत्तज्ज्ञानादौ तत्तददृष्टविशेषस्यैव नियामकत्वकल्पनेनैव ज्ञानयौगपद्यापत्तिवारणसम्भवादिति।

तच्चिन्त्यम्, पार्थिवाद्यणुभिर्विनिगमनाविरहात् मनसस्त्रसरेणुरूपत्वेऽनित्यत्वप्रसङ्गात्, इष्टापत्तावपसिद्धान्तात्, अदृष्टविशेषस्य नियामकत्वे चक्षुरादीनामप्यकल्पनापत्तेश्च। अत एव

---

(१) अयमपि तृतीयो हेतुस्तत्रैव बोध्यः।

(२) त्रसरेणुरूपमित्यर्थः। (३) 'वेतभूत' आदर्शे।

"ज्ञानायौगपद्यादेकं मनः" "न युगपदनेकक्रियोपलब्धेः" "अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात्"। "यथोक्तहेतुत्वा(१)च्चाणु" (गौ०सू०३-२-५९,६०,६१,६२) इत्यादिभिः सूत्रैर्गौतमोऽप्येवमसूत्रयदर्थम्। न च ममापि सूत्राणि सम्मतान्येव। तथा सति "दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः" (गौ० सू०२-१-२२) इति गौतमसूत्रेण दिगादिसिद्धिप्रसङ्गात्। "अर्थेभ्यश्च परं मनः" (क० उ० ३-१०) इत्यनेन मनसः पार्थिवाद्यणुरूपत्वनिषेधाच्चेति मनसोऽतिरिक्तत्वसिद्धिः।

यत्तु परमाणुद्व्यणुकयोश्च मानाभावः, त्रुटावेव विश्रामात् न च त्रुटिः समवेता चाक्षुषद्रव्यत्वात् घटवत्। चाक्षुषद्रव्यसमवायिनः समवेताः चाक्षुषद्रव्यसमवायित्वात् कपालवदिति अनुमानं प्रमाणमिति वाच्यम्, अप्रयोजकत्वात्। अन्यथा परमाणुः समवेतः चाक्षुषद्रव्यसमवायिसमवायित्वात् कपालिकावदित्यनुमानेन तत्तत्समवायिपरम्परासिद्धिप्रसङ्गात्। न चाणुव्यवहारस्य स्थूलद्रव्यावलम्बनत्वाभावः, अणुव्यवहारस्यापकृष्टमहत्त्वाश्रयद्रव्यविषयकत्वात्; महत्यपि महत्तमादणुव्यवहारात्। तथाच यदपेक्षया येऽपकृष्टपरिमाणवन्तस्तदपेक्षया तत्राणुव्यवहार इति।

तच्चिन्त्यम्, चाक्षुषद्रव्यस्यानित्यत्वात्। त्रसरेणुरनित्यः चाक्षुषद्रव्यत्वात् घटवत, चाक्षुषत्वे सति उद्भूतरूपवद्द्रव्यत्वात् पटवत्, त्रसरेणुः समवेतः अनित्यत्वात्पटवत्, त्रसरेणुः प्राग-

(१) 'चाणु मनः' आदर्शे।

भावप्रतियोगी(?) ध्वंसप्रतियोगित्वात् कपालवत्, इत्याद्यनुमानैः त्रसरेण्ववयवसिद्धिः । नच तद्धाराऽपि सिध्येत्, मेरुसर्षपयोः साम्यप्रसङ्गात्कचिदतीन्द्रियद्रव्ये विश्रान्तिसिद्धेर्न किञ्चिदेतत् । इति परमाणुद्व्यणुकादिसमर्थनमपि स्यात् ।

ईश्वरस्य परिमाणवत्त्वे मानाभावः । जीवात्मनां तु महत्त्वं प्रत्यक्षसिद्धमिति । तदनभ्युपगमे तदपि तद्गतिकमेवेति यदि तर्हि आत्मनः परिमाणवत्त्वे मानाभावोपन्यास उचित एव । नचात्मा परिमाणवान् द्रव्यत्वात् घटवदित्यनुमानात्तत्सिद्धिः, अप्रयोजकत्वात् । द्रव्यत्वस्य त्रुटित्वादेरिव परिमाणासाधकत्वात् । अन्यथा त्रुटेरपि परिमाणवत्त्वापत्तेः । तथा च द्रव्यत्वस्य अपरिमितावृत्तित्वमसिद्धमिति ।

तच्चिन्त्यम्, "एषोऽणुरात्मा चेतसा वेदितव्यः" ( मु० उ० ३-१-९ ) "अणीयान्" "महीयान्" इत्यादिश्रुतेः प्रमाणत्वात् । त्रुटित्वादिना परिमाणसाधकत्वे अनिष्टाभावाच्च । त्रुटिः परिमाणवती त्रुटित्वात् इत्यनुमानस्यान्वयव्यतिरेकदृष्टान्ताभावादप्रयोजकत्वमेव । त्रुटिः परिमाणवती द्रव्यत्वात् घटवत् इत्यनुमानं तु स्यादेव । सर्वत्र लाघवप्रमाणगवेषणे जडाभावानिबन्धनात्मव्यवहारसम्भवे लाघवादभावे एव आत्मान्तर्भावप्रसङ्गात् । न च ज्ञानादिमतोऽतिरिक्तत्वावश्यकत्वं, लाघवात् शरीर एव ज्ञानादिमत्त्वस्वीकारात् । न च मृते व्यभिचारः, तत्र प्राणादिमत्त्वस्यैव प्रयोजकत्वात् । परमाणुद्व्यणुकाङ्गीकर्तृनये आत्मनो महत्त्वस्यावश्यकत्वाच्च । अन्यथा परमाण्वादि-

प्रत्यक्षत्वारकमहत्त्वहेतुत्वे आत्ममानसे व्यभिचारापत्तेः, आत्मान्यद्रव्यप्रत्यक्षत्वस्य तज्जन्यतावच्छेदकत्वे चाक्षुषस्पार्शनत्वयोर्विशिष्य तथात्वे च गौरवाच्च। नच मूर्तप्रत्यक्षत्वावच्छिन्नं प्रत्येव महत्त्वस्य हेतुत्वकल्पनाद् आत्ममानसे व्यभिचारानवकाश इति वाच्यम्, इष्टापत्तेः। तथाऽपि श्रुतिसिद्धं परिमाणमात्मनि स्वीक्रियते। सर्वत्र युक्तिगवेषणे इश्वरे ज्ञानमपि न स्यात्, नित्यप्रयत्नेनैव तस्य निष्प्रयोजनत्वात्। एवं नित्येच्छाऽपि न सिद्ध्येत्, शरीरं विना नित्यज्ञानेनैव कर्तृत्वमिव ज्ञानेच्छे अपि विना नित्यप्रयत्नेनैव कर्तृत्वं स्यादिति आत्मनः परिमाणवत्त्वसमर्थनम्।

अनुद्भूतरूपसत्त्वे तु न किमपि प्रमाणमिति मयाऽपि न स्वीक्रियते। अत एव रूपादीनां च नेन्द्रियग्रहणायोग्यत्वम्, वाय्वादौ रूपादिकं नास्तीति सार्वलौकिकप्रत्यक्षात्। अन्यथाऽतीन्द्रियप्रतियोगिकत्वेन पिशाचात्यन्ताभावस्येव तत्सामान्याभावस्याप्रत्यक्षापत्तिः। ननु जन्यद्रव्यत्वावच्छिन्नं प्रति स्पर्शवत्त्वेन समवायिकारणत्वाच्चक्षुराद्यवयवानामनुद्भूतस्पर्श आवश्यकः, तादृशहेतुत्वाकल्पने गगनादीनां द्रव्यारम्भापत्तेरिति चेत्? मैवम्, अतीन्द्रियानन्तस्पर्शकोटिकल्पनामपेक्ष्य लाघवान्मूर्तत्वेनैव द्रव्यसमवायिकरणत्वात्। वस्तुतस्तु मनसोऽतिरिक्तत्वेनानुद्भूतस्पर्शस्वीकारे क्षतिविरहात्। न च मूर्तत्वजातिरप्रामाणिकी, मूर्तत्वस्य स्पन्दसमवायिकारणतावच्छेदकजातिविशेषत्वात्। स्पन्दत्वावच्छिन्नं प्रति मूर्तत्वेन हेतुत्वाकल्पने गग-

नात्मादिषु स्पन्दापत्तेरित्यपि बोध्यम् ।

अत्रेदमवधेयम् । गगनादौ स्पन्दासमवायिकारणविजातीयाभिघातादीनामनभ्युपगमादेव तत्र तदापत्त्यभावात् नानया युक्त्या मूर्तत्वजातिसिद्धिः परन्तु वायुप्रत्यक्षानङ्गीकारकल्पे रूपस्यात्मभिन्नद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वकल्पनेऽवच्छेदकगौरवान्मूर्तप्रत्यक्षत्वस्यैव तज्जन्यतावच्छेदकत्वौचित्यात्तादृशजातिसिद्धिः । न च मानसव्यावृत्तप्रत्यक्षनिष्ठो जातिविशेषः सिध्यतां तज्जन्यतावच्छेदकतयेति किं मूर्तत्वजात्येति वाच्यं, विनिगमनाविरहेणैव तत्सिद्धेः । वस्तुतस्तु भूतत्वेन सह तुल्यवृत्तितया न मूर्त्तत्वं जातिः, किन्त्वखण्डोपाधिरिति निरस्तम् । तत्तदिन्द्रियैस्तत्तद्गुणग्रहणे नियामकाभावात् । तत्तददृष्टाङ्गीकारेऽन्येन्द्रियाणामपलापापत्तेः "सगुणानामिन्द्रियभावात् तेनेतरस्याग्रहणाच्च" इति सूत्रविरोधाच्चेति ।

यत्तु भूतत्वमपि तदेवेति । तन्न, गगनस्य मनसश्चाभ्युपगमात् । समवेतेन्द्रियग्राह्यगुणवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं तत् । आत्मत्वजातिमादायात्मन्यतिव्याप्तिवारणाय वृत्त्यन्तम् । तत्रैवातिव्याप्तिवारणाय समवेतेति इन्द्रिय(१)विशेषणम् । सत्ताजातिमादायातिप्रसङ्गवारणाय द्रव्यत्वव्याप्येति द्रव्यवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकत्वार्थकम् । घटात्मसंयोगादिकमादायातिप्रसङ्गवारणाय जातीति नित्यत्वार्थकम् । तद्वत्त्वं च समवायेन बोध्यमित्यपि केचित् ।

(१) 'इन्द्रियवारणविशेषणम्' आदर्शे

तन्न, एतादृशोपाध्यपेक्षया लाघवादवश्यक्लृप्तजातिविशेषस्यैव भूतपदशक्यतावच्छेदकत्वमुचितमिति । गगनानभ्युपगमे समवेतेन्द्रियग्राह्यशब्दगुणवदीश्वरवृत्तिद्रव्यत्वव्याप्यात्मत्वजातिमादायात्मनि भूतत्वापत्तेश्च ।

न च मूर्तत्वजातेर्द्रव्यसमवायिकारणतावच्छेदकत्वेऽन्त्यावयविनाऽपि द्रव्यारम्भापत्तिरिति वाच्यम्, अन्त्यावयविनिरासस्याऽऽवयोः साम्यात् । तथाहि, स्पर्शवत्त्वेन कारणताया अपि सहकार्यन्तरविरहेणान्त्यावयविनि न द्रव्योत्पत्तिरित्यवश्यवाच्यत्वात् । सहकार्यन्तरं चान्त्यावयविभेदादिः । प्रागभावविरहेण न द्रव्योत्पाद इत्यन्ये । वस्तुतस्तु विजातीयसंयोगरूपासमवायिकारणविरहादेव न तत्र द्रव्योत्पाद इति समीचीनम् ।

पृथक्त्वं तु न गुणान्तरम्, 'घटात्पटः पृथक्' इतिप्रतीतिप्रकारे गुणपदवाच्यत्वे प्रमाणाभावात् । यत्तु न गुणान्तरमिति दीधितिकृद्वचनस्य गुणत्वजात्यभाववदित्यर्थ इति । तन्न, गुणत्वे जातित्वस्याग्रे निराकर्त्तव्यत्वेन तथा व्याख्यातुमशक्यत्वात् । ननु पृथग्व्यवहारस्य कुत्राप्यन्तर्भावासम्भवेनान्यथानुपपत्त्या गुणपदवाच्यताभ्युपगम आवश्यक इति चेत् ? न, अन्योन्याभावादेव पृथग्व्यवहारोपपत्तेः ।

ननु 'पृथक्त्वं नाभावः सावधित्वात्' इत्यनुमानेन तत्राभावत्वाभावनिर्णये नाभावपदार्थान्तर्भाव इति चेत् ? न, पृथतः पृथक्त्वप्रतीतिस्तु न सावधित्वविशिष्टधर्मविषयिणी, मानाभा·

वात् । तथाचोपदर्शितानुमाने हेत्वसिद्धिः ।

ननु पृथक्त्वस्य सावधित्वानङ्गीकारे घटात्पटः पृथक् इत्यत्र पञ्चम्यर्थावधित्वान्वयानुपपत्तिः । तथाच पञ्चमीविधायकसूत्रस्य नैष्फल्यम् । नच तत्र पञ्चम्याः प्रतियोगित्वार्थकतया तस्य च तादृशवाक्यजन्यबोधविषयीभूतान्योन्याभावेऽन्वयसम्भवेन न काऽप्यनुपपत्तिरिति वाच्यम्, तथा सति 'घटात्पटः पृथक्' इत्यस्येव 'घटान्न पटः' इति प्रयोगापत्तिः । 'घटाद् भिन्नः' इत्यादौ पञ्चम्यप्राप्त्यापत्त्या "अन्यारादितरर्ते" (पा० सू० २-३-२९) इति पञ्चमीविधायकसूत्रेऽन्यपदस्यान्यत्वबोधकपदपरस्यावश्यकत्वेन नञ्योगेऽपि पञ्चम्याः सम्भवादिति चेत् ?

अत्रोच्यते, 'घटात्पटः पृथगितरोऽन्यो भिन्नोऽर्थान्तरम्' इत्यादौ च तत्तच्छब्दविशेषयोगे पञ्चमी आनुशासनिकी यतस्ततो 'घटात्पृथग्' इत्यादौ पृथगादिशब्दयोगे पञ्चमीसिद्धेरुपदर्शितसूत्रेऽन्यपदं विशिष्य पृथगादिपदपरं, न तु अन्योन्याभावबोधकपदसामान्यपरमिति ।

परत्वापरत्वयोस्तु गुणान्तरत्वं नोच्यते । तथाहि, परापरव्यवहारप्रकाररूपे परत्वापरत्वे न संयोगादिभिन्ने । न च तर्हि विप्रकृष्टसंनिकृष्टयोः ज्येष्ठकनिष्ठयोश्चायमस्मात्परः अयमस्मादपर इत्यादिव्यवहारः कथमिति वाच्यम्, विप्रकृष्टत्वसन्निकृष्टत्वाभ्यां ज्येष्ठत्वकनिष्ठत्वाभ्यां तथाविधव्यवहारोपपत्तेः । तथाच विप्रकृष्टत्वं बहुतरसंयुक्तसंयोगः । सन्निकृष्टत्वम् अल्पतरसंयुक्तसंयोगः । तथाच न विप्रकृष्टसन्निकृष्टयोः परापरबुद्धिप्रकारतया

दैशिकपरत्वापरत्वे संयोगातिरिक्तगुणरूपे सिध्यतः। एवं ज्येष्ठत्वं तत्प्रागभावाधिकरणक्षणवृत्तित्वम्। कनिष्ठत्वं तदुत्पत्तिक्षणध्वंसप्रतियोगिक्षणवृत्तितदुत्पत्तिक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वम्। तथाच ज्येष्ठकनिष्ठयोः परापरबुद्धिप्रकारतया न कालिकपरत्वापरत्वे गुणरूपे सिध्यतः। तत्राद्ये तृतीयमपेक्षते, अन्त्ये परस्पराश्रयमात्रमिति तु विवेकः। अस्यार्थः—आद्ये दर्शितविप्रकृष्टत्वसंनिकृष्टत्वे तृतीयं तृतीयदेशम् अपेक्षते। 'प्रयागतः काशीविप्रकृष्टा मथुरा' 'मथुरातः काशीसन्निकृष्टः प्रयागः' इत्यादिव्यवहारात्। अन्त्ये ज्येष्ठत्वकनिष्ठत्वे परस्पराश्रयमपेक्षते। तथाच ज्येष्ठत्वव्यवहारेण कनिष्ठत्वाश्रयो विषयीक्रियते। कनिष्ठत्वव्यवहारेण ज्येष्ठत्वाश्रयो विषयीक्रियते। लक्ष्मणात् ज्येष्ठो रामो रामात्कनिष्ठो लक्ष्मण इति व्यवहारात्। अत्रानन्तक्षणघटितत्वाद्गौरवमिति ध्येयम्।

एवं विशेषोऽपि च न पदार्थान्तरं, मानाभावात्। 'न पदार्थान्तरम्' इति द्रव्यादिपञ्चभिन्नपदार्थनिषेधः। ननु नित्यद्रव्याणामाश्रयभेदाभावात्कथं परस्परं व्यावृत्तिधीर्विशेषान् विनेति चेत्? न, समवायेन व्यावर्त्तकं धर्मं विनाऽप्यतिरिक्तविशेषस्वीकर्तॄणां मते विशेषाणामिव नित्यानामपि ताद्रात्म्येनैव परस्परव्यावृत्तिबुद्धिजननात्।

योगिनोऽतिरिक्तविशेषमीक्षन्ते प्रत्यक्षत एव चेत्? एवं तर्हि त एव सशपथं पृच्छ्यन्तां किमेतेऽतिरिक्तं विशेषमीक्षन्ते नवा। इति विशेषभङ्ग इति।

तन्न, नित्यानां लक्ष्यतावच्छेदकधर्मास्वीकारे तत्समनैयत्यरूपलक्षणस्वरूपहानेः ।

यत्तु लक्ष्यतावच्छेदकधर्मो नित्यद्रव्येष्वङ्गीक्रियते, परन्तु तेन धर्मेण नित्यानां व्यावृत्तिर्नाङ्गीक्रियते; तादात्म्येन तद्व्यक्तिरेव व्यावर्त्तिका स्वीक्रियते ।

तन्न, विशेषस्यार्थस्याभावे विशेषपदस्य प्रातिपदिकत्वासङ्गत्यापत्तेः । न च शशशृङ्गादिपदानामिवार्थसत्त्वाभावेऽपि प्रातिपदिकत्वसङ्गतिवत्सङ्गतिः प्रकृतेऽपीति वाच्यम्, एतेषां वाक्यतुल्यत्वेन यथाकथञ्चित् खण्डशः प्रसिद्धाऽर्थसत्त्वाङ्गीकारेण प्रातिपदिकत्वसत्त्वात् । प्रकृते तु विशेषस्य पदत्वादेवार्थसत्त्वभूते न प्रातिपदिकत्वमाञ्जस्यमाप्नुयात् । इति विशेषसमर्थनम् ।

रूपादिकं चाव्याप्यवृत्ति । ननु रूपादेरव्याप्यवृत्तित्वाङ्गीकारे(१) सविषयावृत्तिव्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वाभावनियमभङ्गप्रसङ्ग इति चेत्? न, सविषयावृत्तेर्व्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तिविरोधस्य निष्प्रामाणिकत्वात् । तथाच प्रमाणाभावेन तादृशव्याप्तेरभावान्न कोऽपि दोषः ।

ननु तथापि रूपादेरव्याप्यवृत्तित्वे प्रमाणाभाव इति चेत्? पक्वेऽपि च घटे रक्तप्रतीतिर्नाप्रमा, बाधकाभावात् । उपलभ्यते च भग्नेऽपि घटेऽन्तस्तस्मिन्नीलं रूपम् । तथाचैकस्मिन्नधिकरणे

---

(१) अस्मदादिज्ञानस्याव्याप्यवृत्तित्वेन ईश्वरज्ञानस्य च व्याप्यवृत्तित्वेन तद्वृत्तिज्ञानत्वजातौ दोषवारणाय सविषयावृत्तीति ।

उपलभ्यमानयोरेककालावच्छेदेन विरुद्धयो रक्तनीलयोरवच्छेदकभेदं विनाऽनुपपन्नतयाऽवच्छेदककल्पनस्यावश्यकतया किमवशिष्टमव्याप्यवृत्तित्वे रूपादीनामिति । स्मृतिरपि—

लोहितो यस्तु वर्णेन मुखे पुच्छे तु पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥ इति ।

नानाजातीयरूपवदवयवारब्धे घटादौ अतिरिक्तचित्ररूपवादिनां प्राचां मतं दूष्यते । चित्रमपि नातिरिक्तं रूपम् । नचातिरिक्तचित्ररूपानङ्गीकारे 'चित्ररूपम्' इति प्रतीतेः का गतिरिति वाच्यम्, समानाधिकरणाव्याप्यवृत्तिनीलपीतादिसमूहाच्चित्रमिति प्रतीत्युपपत्तेः ।

ननु चित्रमिति प्रतीतीनां सर्वत्र नानारूपविषयकत्वकल्पने गौरवात्तदपहाय लाघवादतिरिक्तैकचित्रविषयकत्वकल्पनाया एवोचितत्वादिति तादृशप्रतीतिविषयतयाऽतिरिक्तचित्रसिद्धिरप्रत्यूहैवेति चेत् ? अत्रोच्यते, नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वनियमश्चेति । तथाचातिरिक्तचित्ररूपस्वीकारे तादृशनियमभङ्गप्रसङ्ग इति नानाजातीयरूपवदवयवारब्धे घटादौ अव्याप्यवृत्तिनानारूपस्वीकार एवोचित इति निष्प्रत्यूहम् ।

इदं तु न सम्यक् । तथाहि, विजातीयनानारूपवदवयवारब्धे घटादावव्याप्यवृत्तिनानाजातीयरूपाङ्गीकारे नीलाद्यवयवावच्छेदेन पीतादिवारणायावच्छेदकतासम्बन्धेन पीतादिकं प्रति स्वसमवायसम्बन्धेन पीतादीनां षडभावाभावकारणगौरवात् चित्ररूपवादिमते तु सर्वनीलादिस्थले चित्रापत्तिवारणाय

चित्रत्वावच्छिन्नं प्रति कार्यकालवृत्तितया चित्रेतररूपाभावत्वे-नैकहेतुत्वकल्पने स्फुटमेव लाघवम् । तथाच लाघवतर्कोपो-द्बलकप्रमाणसिद्धचित्ररूपनिवारणं गीर्वाणगुरूणामशक्यमिति मन्तव्यम् ।

नच चित्ररूपवादिमते चित्रघटे नीलाद्युत्पत्तिवारणाय विजातीय नीलाद्यादिकं प्रति नीलाभावादेः स्वाश्रयसमवेतत्व-प्रत्यासत्त्या प्रतिबन्धकल्पने गौरवमिति वाच्यम्, तस्योत्तरका-लिकत्वे फलमुखतयाऽदोषत्वात् । एवमेतादृशरीत्या स्पर्शादिक-मप्यात्मलाभपदवीं विदधातीत्यलम(१)धिकेन ।

स्पर्शोऽपि चाव्याप्यवृत्तिः, सुकुमारकठिनस्पर्शवदवयवार-ब्धेऽवयविनि व्याप्यवृत्तित्वासम्भवात् । ननु व्याप्यवृत्तय एव स्पर्शास्तत्र किमिति नाङ्गीक्रियन्ते इति चेत्?तथा सति सुकुमा-रकठिनाभ्यामवयवाभ्यामारब्धेऽवयविनि सुकुमारावच्छेदेन त्वक्संयोगे काठिन्यस्याप्युपलम्भप्रसङ्गः स्यात् । नचाव्याप्यवृ-त्तिस्पर्शाङ्गीकारेऽप्येष दोष इति वाच्यम्, सामान्यतोऽव्याप्यवृ-त्तिस्पार्शनत्वावच्छिन्नं प्रति स्वावच्छेदकावच्छेद्यत्वसम्बन्धेन त्वक्संयोगस्य हेतुत्वकल्पनात् ।

नच व्याप्यवृत्तिवादिनापि कठिनस्पर्शस्पार्शनत्वावच्छिन्नं प्रति कठिनस्पर्शादिमदवयवावच्छिन्नत्वक्संयुक्तसमवायत्वेन हे-तुत्वकल्पनान्नानुपपत्तिरिति वाच्यम्, गौरवात् ।

नच—सर्वमिदं सुकुमारकठिनभेदेन पृथिव्याः स्पर्शद्वैविध्ये,

(१) 'मधिक्' आदर्शे ।

तदेव दुर्लभं, सुकुमारत्वकठिनत्वादेः संयोगवृत्तिजातित्वात्, तस्मादारम्भकसंयोगवृत्तिजातिविशेषावेव सुकुमारत्वकठिनत्वे इति वाच्यम्, चाक्षुषत्वप्रसङ्गात्।

रसोऽपि चाव्याप्यवृत्तिः। तिक्तमधुरादिनानावयवारब्धे द्रव्ये व्याप्यवृत्तिरसासम्भवात्। अन्यथा तत्र तिक्तावयवावच्छेदेन रसनसंयोगे माधुर्योपलम्भप्रसङ्गात्। नीरस एव वा नानारसवदवयवारब्धेऽत्र(१)यविन्यवयवी।

अत्रायमाशयः। ननु नानाजातीयरसवदवयवारब्धे घटे अव्याप्यवृत्तिनानारसाङ्गीकारो निरर्थकः। न च तत्र तथाऽनभ्युपगमे रससाक्षात्कारानुपपत्तिः चित्ररसादिस्वीकारस्य गौरवदोषग्रासेन नीरसत्व एव पर्यवसानादिति वाच्यम्, तत्रावयवगतरसमादाय तदुपपत्तेः।

न च यत्र द्व्यणुकपर्यन्तं नीरसं तत्र का गतिरिति वाच्यम्, तत्र रसांशे उपनीतभानात्मकपरमाणुगतरसविषयकप्रत्यक्षस्यैवाङ्गीकारादिति।

ननु तत्र रसोत्पत्तौ बाधकाभावोऽवयवरसरूपकारणसत्त्वादिति चेत्? न, रसत्वावच्छिन्नस्वसामानाधिकरण्यविशिष्टस्वविजातीयरससामानाधिकरण्यसम्बन्धेन रसत्वेन प्रतिबन्धकत्वकल्पनात्।

इदं त्वापाततः, तत्र चित्ररसस्वीकाररीतेरुक्तत्वादिति

(१) यत्रावयवी नानारसवदवयवारब्धस्तत्राऽवयवी नीरसः, एकरसवदवयवारब्धोऽवयवी तु सरस एवेति भावः।

ध्येयम् ।

इति क्रमेण नानाजातीयगन्धवदवयवारब्धेऽवयविनि अव्याप्यवृत्तित्वेन गन्धो व्याख्यातः । इदमुपलक्षणम् । तत्रावयवी निर्गन्धो वेत्यपि द्रष्टव्यम् ।

कर्मापि चाऽव्याप्यवृत्ति, चलन्तीषु सर्वासु शाखासु निश्चलमूले वृक्षे 'चलति' इति प्रत्ययात् । तथाच कर्मणोऽव्याप्यवृत्तित्वास्वीकारे तत्र तथाविधप्रतीत्यनुपपत्त्या तदव्याप्यवृत्तित्वाङ्गीकार आवश्यकः । ननु तत्र 'शाखा एव परं चलन्ति, न तु वृक्षः' इति बाधकप्रतीतिसत्त्वात्चलतीति प्रत्ययो भ्रम एवेति चेत् ? न, 'शाखा एव' इत्यादिना दर्शितप्रत्ययस्य सर्वावयवावच्छेदेन चलनाभावो विषयो न पुनः सर्वावयवानामवच्छेदकत्वावगाहनं विना चलनाभावः, तथाविधवृक्षे 'चलति' इतिप्रत्ययरूपप्रतिबन्धकसत्त्वात् । तथाच तयोः परस्परं प्रतिरोधेनाप्रामाण्यापत्त्या विषयव्यवस्थया प्रामाण्याभ्युपगम एवोचितः । अत एव 'सदाकर्माऽश्वत्थः' इति प्रसिद्धिरपि ।

अत्रैवं स्यात् भवतूपदर्शितरीत्या कर्मणोऽव्याप्यवृत्तित्वं; रूपादेरव्याप्यवृत्तित्वं तु प्रतिकूलतर्कग्रस्तत्वाद्धेयमेव । तथाहि, नानारूपवदवयवारब्धे घटेऽव्याप्यवृत्तिनानारूपवत् सर्वनीलावयवारब्धे घटेऽपि स्वस्वावच्छेदेन नानानीलोत्पादप्रसङ्गोऽवच्छेदकतासम्बन्धेन नीलजनकस्य नीलस्य तत्र सर्वावयवावच्छेदेन सत्त्वादिति ।

अत्र वदन्ति—सर्वैर्नीलैरारब्धेऽवयविनि ना(१)नानीलं स्वस्वावच्छेदेनोत्पद्यमानमविरोधाव्द्यापकमेवोत्पद्यते, सजातीयविजातीयेषु नानापदार्थेषु जायमानं समूहालम्बनमिवैकज्ञानम्। अत्र स्वस्वावच्छेदेनेत्यनेन व्याप्यवृत्तेरप्यवच्छेदकत्वमङ्गीक्रियत एवेति ध्वनितम्। तथा च लाघवादेकमेव नीलमङ्गीक्रियत इति।

अथावयव्येकत्वं प्रति अवयवैकत्वहेतुताखण्डनम्। तथाहि, एकत्वं न सासमवायिकारणकम्, असमवायिकारणत्वेन कारणत्वाभावात्।

एकत्वमित्युपलक्षणम्। द्वित्वादिकमपि न सासमवायिकारणकमित्यपि बोध्यम्। नच द्वित्वादिकं प्रत्येकत्वद्वयादेरसमवायिकारणत्वाभावे घटद्वय एव द्वित्वमुत्पद्यते, न त्रिष्वित्यत्र नियामकाभाव इति वाच्यम्, तत्र समवायिकारणद्वयस्यैव विशेषतो नियामकत्वसम्भवात्।

न च तत्र समवायिकारणद्वयस्य विशेषतो हेतुत्वकल्पने तत्रैकद्वयहेतुतामादाय विनिगमनाविरह इति वाच्यम्, तत्तत्समवायिकारणसमवेतरूपादीनां व्यक्तिस्थानीयापत्तिवारणाय तत्तव्द्यक्तिसमवेतं प्रति तत्तव्द्यक्तित्वेन हेतुत्वकल्पनाया आवश्यकत्वस्यैव विनिगमकत्वात्। असमवायिकारणकत्वनिषेधस्तु आत्माश्रयदोषेणेति बोध्यम्।

ननु मास्तु असमवायिकारणत्वेन कारणत्वम्, तथापि

(१) 'नीलानीलम्' आदर्शे।

भावकार्यस्य सासमवायिकारणत्वानियमेनावयव्येकत्वं प्रति स्वाश्रयसमवेतसमवेतत्वसम्बन्धेनावयवैकत्वत्वादिनाऽसमवायिकारणत्वमावश्यकमिति चेत् ? न, भावकार्यस्यासमवायिकारणजन्यत्वे मानाभावात् । तथाचाप्रयोजकत्वादुपदर्शितनियम उपेक्षणीयः ।

द्रव्यनाशे च सर्वत्रासमवायिकारणनाश एव कारणं, न तु समवायिकारणनाशः । ननु विनिगमनाविरहात्समवायिकारणनाशस्यापि तत्र हेतुत्वमावश्यकमिति चेत् ? न, नित्यसमवेतद्रव्यनाशे (१)तस्य क्लृप्तत्वात् । तथा च व्यणुकनाशानुरोधेन द्रव्यनाशं प्रत्यसमवायिकारणनाशस्य हेतुताया आवश्यकत्वमेव विनिगमकमिति निष्प्रत्यूहम् ।

अथ मतम् चक्षुः संयोगादिरूपकारणबलात् गगनादेः प्रत्यक्षतावारणाय बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति उद्भूतरूपवत्त्वेन हेतुत्वाद्वायोरप्रत्यक्षत्वमेवेति ।

अत्रोच्यते, द्रव्यस्पार्शनप्रत्यक्षे स्पर्शवत्त्वमेव प्रयोजकम् । अत एव 'शीतो वायुः' इत्यारोपोऽपि स्पार्शनः साधु सङ्गच्छते । ननु द्रव्यस्पार्शनं प्रति स्पर्शस्य हेतुत्वे त्रुटेः स्पार्शनापत्तिरिति चेत् ? इष्टापत्तिः । त्रुटेरस्पार्शने तु प्रकृष्टतमं परिमाणमपि तथा । अत्र त्रसरेणुमहत्त्वव्यावृत्तयावन्महत्त्वसाधारणजात्यवच्छिन्नमित्यर्थः । तादृशजातिसिद्धिस्तु स्पार्शनजनकतावच्छेदकतयेत्यवेहि ।

---

( १ ) असमवायिकारणनाशकारणत्वस्येत्यर्थः ।

स्पार्शनजनकतावच्छेदककोटौ रूपं निवेश्यत इति चेत् ? न, गौरवात् । न च प्रामाणिकं गौरवं न दोषाय, मानाभावात् । तथा च त्वग्व्यापारानन्तरं 'वायुर्वाति' इति सार्वलौकिकप्रत्यक्षस्यान्यथानुपपत्त्या च रूपं स्पार्शनजनकतावच्छेदककोटौ न निवेशनीयम् । फूत्कारादौ च स्फुटतरप्रत्यक्षाः सङ्कल्पादय इति सिद्धम् ।

चाक्षुषद्रव्यप्रत्यक्षे तु रूपं कारणम् । द्रव्यचाक्षुषजनकतावच्छेदककोटौ स्पर्शनिवेशे गौरवान्मानाभावात् । निःस्पर्शायामपि प्रभायां चलनादिप्रत्ययाच्च स्पर्शोऽपि न कारणम् ।

नन्वेवं सति बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्ने किं नियामकमिति चेत् ? न, द्रव्यसमवेतेन्द्रियप्रत्यक्षे तु अनात्मसमवेतशब्दरसगन्धजातीतरयोग्यधर्मसमवायित्वं हि नियामकं बोध्यम् । सुखादिसमवायिकारणतावच्छेदकत्वेन सिद्धमात्मत्वं जातिर्नेश्वरे इति तदीयज्ञानादिपिशाचादिसंयोगादिवारणाय योग्येति । (१)विषयिधर्मासमानाधिकरणेत्यभिधाने तु शब्दो नोपादेयः ।

अत्रायं निष्कर्षः—बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति अनात्मसमवेतरसगन्धशब्दजातीतरयोग्यधर्मसमवायित्वं कारणम् । अत्रात्मनि रसादीतरज्ञानादिरूपयोग्यधर्मसमवायित्वसत्त्वात् बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षापत्तिवारणायानात्मसमवेतत्वं धर्मविशेषणम् । आकाशादौ तादृशधर्मसत्त्वात्तदापत्तिवारणाय

(१) 'अनात्मसमवेतपदस्य स्थाने' इत्यादिः ।

शब्देतरत्वस्य निवेशः । वाय्वानीतजलीयभागचम्पकभागयो रसगन्धरूपतादृशयोग्यधर्मसत्त्वात्तत्रोपदर्शितापत्तिवारणाय रस-गन्धेतरेति । द्रव्यत्वादिरूपतादृशधर्मसमवायित्वमादाय गगनादौ च तदापत्तिवारणाय जातीतरेति ।

एतानि सर्वाणि विशेषणानि निरस्य स्वरूपयोग्यस्य फ-लावश्यंभाव इति व्याप्त्यङ्गीकारे सार्थकानि । तदनङ्गीकारे तु तत्तद्विशेषसामग्र्यभावादेवात्मादौ बहिरिन्द्रियजन्यद्रव्यप्रत्य-क्षत्वावच्छिन्नापत्तिवा(१)रणसम्भवात्तादृशविशेषणान्यनुपादेया-न्येवेति ।

अत्रानात्मसमवेतेत्यत्र विषयिधर्मासमानाधिकरणेति विव-क्षायां तु वि(२)षयिधर्मसमानाधिकरणत्वावच्छिन्नप्रतियोगिताक-भेदस्य तत्तव्द्यक्तित्वेन निवेशने न(३) ज्ञानादिसमानाधिकरणप्र-तियोगिताकभेदमादाय विनिगमनाविरहः, तथाविधभेदस्यैतादृ-शभेदसमानियततया ऐक्येन तद्व्यक्तित्वेनैकनिवेशनेनैव सर्वनिवे-शसम्भवादिति ध्येयम् ।

शब्दो नोपादेय इति तु आकाशस्य ईश्वरादनतिरिक्तत्व-पक्षे, न तु वस्तुत इति दिक् ।

इदं गौरवमिति चेत् ? जीवस्य परिमाणशून्यत्वमते नयनसं-सृष्टपित्तद्रव्यस्य परिमाणवत्त्वमते च परिमाणवत्त्वमेव कारणमिति ।

---

(१) 'वारणासम्भवात्' आदर्शे ।

(२) विषयिधर्मासमा' आदर्शे ।

(३) 'न' नास्त्यादर्शे ।

ननु नयनगतपित्तद्रव्ये परिमाणवत्त्वे प्रमाणाभावस्तदनुपलम्भादनुमानस्याप्रयोजकत्वात्प्रमाणान्तरस्याभावात् । तथाचोपदर्शितप्रत्यक्षे परिमाणस्य हेतुत्वे नयनसंसृष्टपित्तद्रव्यप्रत्यक्षानुपपत्तिरिति चेत् ? नयनसंसृष्टपित्तद्रव्यं नीरूपमेव । तथाच तत्र परिमाणानङ्गीकारेऽपि न क्षतिः, रूपस्वरूपविशेषकारणाभावात्तस्याप्रत्यक्षत्वेन व्यभिचाराभावात् । तथाविधपित्तस्य रूपस्वीकारे तु पुरुषान्तरेण तत्पीतिमोपलम्भापत्तिः ।

ननु नयनसंसृष्टपित्तद्रव्ये रूपानङ्गीकारे कथं 'पीतः शङ्खः' इत्यारोपः, तत्र नयनसंसृष्टपित्तद्रव्यरूपस्यैवानुभूयमानस्य शङ्खादावारोपादिति चेत् ? मैवम्, स्मर्यमाणं नयनासंसृष्टं द्रव्यनिष्ठं पीतं शङ्खादावारोप्यत इति । तथाच नयनगतपित्तद्रव्यरूपस्यानुभूयमानस्य शङ्खादावारोपानभ्युपगमाददोषः ।

द्रव्यप्रत्यक्षत्वावच्छिन्नेऽनुगतं नियामकं तु शब्दरसगन्धजातीतरयोग्यधर्म्मसमवायित्वम् ।

ननु रसेतरत्वस्योपदर्शितकारणतावच्छेदके निवेशे रसनगतपित्तद्रव्यप्रत्यक्षे व्यभिचारः, तत्र तथाविधयोग्यधर्मसमवायित्वाभावादिति चेत् ? न, रसनगतं हि पित्तं द्रव्यं न रूपवत् । अतो न चाक्षुषम् । नवा स्पर्शवत्, अतो न स्पार्शनम् । रसना च न द्रव्यग्राहिका । अतो न रासनप्रत्यक्षम् । तथा च रसनगतपित्तद्रव्यस्य प्रत्यक्षाभावान्न तत्रोपदर्शितकार्यकारणभावे व्यभिचार इति निष्प्रत्यूहम् ।

एवं वाय्वानीतचम्पकभागादौ रूपादिसद्भावे प्रमाणा-

भावेन प्रत्यक्षत्वानभ्युपगमेन वाय्वानीतचम्पकभागे व्यभिचारोऽपि प्रत्युक्तः ।

अत्र वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षादौ कारणकथनं तु प्रौढ्या । वस्तुतस्त(१)थाऽभावेऽपि क्षतिविरहः । गगनादेः प्रत्यक्षवारणं तु लाघवादवश्यक्लृप्तेन द्रव्यलौकिकस्पार्शनत्वावच्छिन्नं प्रति स्पर्शहेतुत्वेन द्रव्यचाक्षुषं प्रति रूपहेतुत्वेन सम्पादनीयमिति ध्येयम् ।

घटत्वादेश्चाभावो न घटत्वत्वादिना प्रत्यक्षः, घटत्वत्वस्य घटेतरावृत्तित्वे सति घटनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपतया घटेतरावृत्तिकालादिघटितत्वेनातीन्द्रियत्वात् । तथाचातीन्द्रियधर्मावच्छिन्नप्रतियोगिताकाभावस्य लौकिकप्रत्यक्षाभावेन घटत्वत्वावच्छिन्नप्रतियोगिताकाभावस्य न लौकिकप्रत्यक्षम् । अत एव जातित्वस्य नित्यानेकसमवेतत्वरूपतयाऽतीन्द्रियध्वंसादिघटितानित्यत्वघटितत्वेन तेनापि रूपेण न प्रत्यक्षमिति पश्यन्तु ।

सत्ता च न द्रव्यगुणकर्मवृत्तिरेका प्रत्यक्षसिद्धा जातिः, धर्मगगनादिपरमाणुइन्द्रियादीनामतीन्द्रियत्वेन तत्र प्रत्यक्षायोगात् ।

न च सन्नित्यादिव्यवहारबलादेव सत्ताजातिरायास्यतीति वाच्यम्, जात्यादावपि सद्व्यवहाराच्च । तथाच तत्रापि सत्तापरपर्याया भावत्वादिकमेव तद्व्यवहारविषय इति न सत्ताजातिसिद्धिरिति सिद्धम् ।

(१) तादृशानुगतकार्यकारणभावस्यासत्त्वेऽपीत्यर्थः ।

ननु घटः सन्नित्यादिव्यवहारस्यान्यथानुपपत्तिसिद्धायां सत्ताजातौ जात्यादौ सत्ताव्यवहारस्यैकार्थसमवायसम्बन्धेन सत्ताजातिरेव विषयो न भावत्वादिकमिति चेत् ? अत्रोच्यते, घटादौ सद्व्यवहारश्च वर्तमानत्वनिबन्धनः। न च वर्तमानत्वादेरननुगततयाऽनुगतसद्व्यवहारो विना सत्ताजातिं (१)न निर्वहतीति वाच्यम्, अनुगततया व्यवहारानभ्युपगमात्।

न च सच्छब्दशक्यतावच्छेदकतया सत्ताजातिरायास्यति, भावत्वस्यैव सच्छब्दशक्यतावच्छेदकत्वात्। तच्चाभावान्यत्वम्। अभावत्वं चानुगतप्रत्यक्षसिद्धोऽखण्डोपाधिः, भावत्वं वाऽखण्डोपाधिः। तच्च ज्ञेयत्वादिवत् घटाभावादिवच्च स्ववृत्त्यपि।

एवं गुणत्वमपि न रूपादिषु चतुर्विंशतावेका प्रत्यक्षसिद्धा जातिः, अतीन्द्रियरूपादौ प्रत्यक्षायोगात्। अनुमानस्य चाप्रयोजकत्वात्।

न च रूपादिषु अनुगतगुणव्यवहारादेव सा(२)जातिः सेत्स्यति तुरगादेरुत्कृष्टगतिमत्त्वे ब्राह्मणादेश्च द्वेषाद्यभावेऽपि गुणव्यवहारात्। तथाच यथा तुरगादौ गत्यादिनिष्ठोत्कर्षमादाय गुणव्यवहारः, तथा रूपादिष्वपि उत्कर्षादिकमादाय गुणव्यवहारोपपत्तौ चतुर्विंशतिगुणसाधारणानुगतगुणत्वजातौ मानाभाव इति बोध्यम्।

अत्राचार्याः-द्रव्यकर्मान्यसामान्यवद्वृत्तिकारणतात्वेना-

(१) 'न' नास्त्यादर्शे।
(२) 'सत्ताजातिः' आदर्शे।

नुगतीकृतानां रूपादिकारणतानामवच्छेदकतया गुणत्वजाति-रायास्यतीत्यनुमन्यन्ते ।

तत्र ब्रूमः—अनुगतस्यैकस्य कार्यतावच्छेदकस्य विरहेऽपि येन केनापि रूपेण कारणत्वान्यनुगमय्य जातिकल्पनेऽतिप्रसङ्गो जातिसङ्करश्चेति दिक् ।

इदमत्र बोध्यम्—असति बाधके गुणपदशक्यतावच्छेदकत्वेन गुणत्वजातिसिद्धौ बाधकाभावः ।

न च तथा सति विभुपदशक्यतावच्छेदकत्वेन विभुचतुष्टयमात्रवृत्तिजातिसिद्धिप्रसङ्ग इति वाच्यम्, इदानीम् ईश्वरजीवातिरिक्तस्य विभुत्वे मानाभावेन विभुत्वस्यात्मत्वतुल्यवृत्तितया आत्मत्वातिरिक्तजातित्वे तुल्यव्यक्तिवृत्तित्वरूपबाधकसत्त्वे तथा दोषानवकाशात् । आकाशादीनामतिरिक्तत्वपक्षेऽपि तथा स्वीकारे बाधकाभावाच्च ।

इदं "पूर्णाय परमात्मने" इत्यत्रेश्वरे आत्मपदव्यपदेशं कुर्वतो दीधितिकृतोऽपि संमतम् । (१)आत्मपदशक्यतावच्छेदकतां विना ईश्वरसाधारणात्मत्वजातौ युक्त्यन्तराभावेन तथा व्यपदेशोऽसङ्गत एव स्यादिति ।

अनुभवत्वं तु न जातिः । शाब्दादिज्ञानेऽनुभवव्यवहारश्च स्मृत्यन्यज्ञाननिबन्धनः । तथाचानुभवव्यवहारबलादनुभवत्वजातिरित्यपास्तम् ।

ननु 'अनुभवामि'इत्यनुव्यवसायबलादनुभवत्वजातिसि-

(१) अस्य 'अन्यथा' इत्यादिः ।

द्धिरिति । अत्रोच्यते—जातिस्त्वनुभवत्वं साक्षात्कारित्वमेव, साक्षात्कारिणि ज्ञान एव तत्प्रत्ययात् । सत्यपि चानुमानिकादिसुखादिनिश्चये सुखादिकमनुभवामीति प्रत्ययाभावादिति ।

केचित्तु विशेषणज्ञानादिजन्यतावच्छेदककोटिप्रविष्टतयाऽनुभवत्वजातिसिद्धिः । अन्यथा विशिष्टबुद्धित्वादेस्तथात्वे स्मृतौ व्यभिचारप्रसङ्ग इत्याहुः ।

तदसत्, प्रत्यक्षत्व एव जन्यतावच्छेदकत्वोपपत्तौ अतिरिक्तानुभवत्वस्य तत्र निवेशे प्रयोजनाभावात् ।

नच विशिष्टप्रत्यक्षत्वाद्यवच्छिन्नं प्रति विशेषणज्ञानादेर्हेतुत्वे विशेषणज्ञानादिकं विनाऽनुमित्याद्यात्मकाविशिष्टबुद्ध्यापत्तिरिति वाच्यम्, अनुमित्यादेः पूर्वं परामर्शादेरावश्यकत्वेन तथा वक्तुमशक्यत्वात् ।

नचैवं सति साध्यविशेष्यकानुमितिविलोपप्रसङ्गः, इतरभेदज्ञानाभावदशायामपि इतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवी इत्याकारकव्यतिरेकव्याप्त्यवगाहिपरामर्शसम्भवेन तस्मात्तदानीमपि साध्यविशेष्यकानुमितेरपि सम्भवादिति वाच्यम्, तावता क्षतिविरहात् ।

भवतु वा विशिष्टाद्यनुमितित्वाद्यवच्छिन्नं प्रत्यपि विशेषणज्ञानादेर्हेतुत्वम् । नचैवं गौरवावकाशः, नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वाभावेन शुद्धानुभवत्वेन तथाऽसम्भवेन जन्यत्वनिवेशे कालिकसम्बन्धेन घटादिमत्त्वमादाय विनिगमनाविरहेणानन्तकार्यकारणभाववृद्ध्या तदपेक्षया तथाविधकार्यकार-

णभावस्यैव सम्यक्त्वात् ।

न च प्रत्यक्षत्वस्य जन्यतावच्छेदकत्वे स दोषस्तदवस्थ एवेति वाच्यम्, ईश्वरप्रत्यक्ष(१)व्यावृत्तास्मदादिप्रत्यक्षसाधारणजातिविशेषमभ्युपेत्य तस्यैव तथात्वोपगमात् । अनुभवत्वमपि तथा सम्भवतीति तु न मन्तव्यम्, तथा सति प्रत्यक्षत्वेन सङ्करप्रसङ्गात् ।

नचैवम् 'अनुभवं प्रत्येव वा' इति दीधितिविरोधः युक्त्या पदार्थतत्त्वविवेकस्य ग्रन्थविरोधेनानिवारणीयत्वादित्यादि निपुणतरमूहनीयम् ।

एवं घटाद्यभावस्याप्यभावोऽतिरिक्त एव, घटादिमति तदभावो नास्तीत्यबाधिताभावप्रत्ययात् । अन्यथा घटाद्यभावाभावस्य घटादिभावस्वरूपत्वेऽभावत्वेन प्रत्ययानुपपत्तिः स्यात् ।

नच भावाभावसाधारणमभावत्वमखण्डोपाधिरित्युक्तौ नायं दोष इति वाच्यम्, एवं च लाघवादेव घटाद्यभावाभावस्यातिरिक्तत्वसिद्धेः । लाघवानादरेऽभावमात्रस्यानातिरिक्तत्वसिद्धिप्रसङ्गादित्यादिकमवधेयम् ।

नचैवमनवस्था, घटाभावस्य (२)तदभावरूपत्वे विरोधाभावात् । तथाच घटाभावाभावस्याप्यभावो (३)घटाभाव एव न त्वतिरिक्त इति नानवस्था ।

अन्योन्याभावस्य वा भावत्वं, संसर्गाभावत्वं चाऽन्योन्याभावः, अतिरिक्तान्योन्याभावाङ्गीकारेऽनवस्थाप्रसङ्गात् । इदं

---

(१) 'व्यावृत्त' नास्त्यादर्शे । (२) घटाभावाभावस्तत्पदार्थोऽत्र बोध्यः ।
(३) 'घटाभावाभाव' आदर्शे ।

चान्योन्याभावत्वावच्छिन्नस्यान्योन्याभावमवलम्ब्योक्तम् । घटाद्यन्योन्याभावस्य तु अन्योन्याभावो भावत्वं, संसर्गाभावत्वं घटाद्यन्योन्याभावत्वं चेत्यपि बोध्यम् ।

केचित्तु अन्योन्याभावस्याप्यन्योन्याभावोऽतिरिक्त एव । नचैवमनवस्था, प्रामाणिकत्वेनादोषत्वात् । अन्यथाऽन्योन्याभावमात्रस्यैवातिरिक्तत्वविलोपप्रसङ्गात् । सर्वत्र तदधिकरणमात्रवृत्तिधर्म एव तत्स्वरूपत्वकल्पनसम्भवादिति वदन्ति ।

ध्वंसप्रागभावयोश्चातिरिक्तावेव प्रागभावध्वंसौ, घटादेः सत्त्वकाले प्रागभावध्वंसौ न स्त इत्यबाधिताभावप्रत्ययात् । यदि चानयोरत्यन्ताभावविषयत्वेनैवोपपत्तेर्न ध्वंसप्रागभावप्रागभावध्वंसयोरातिरिक्तत्वे साधकमिति विभाव्यते, तदा घटध्वंसो भविष्यति घटप्रागभावो नष्ट इत्यादिप्रतीतिर्ध्वंसप्रागभाव(१)(प्रागभावध्वंस)योरतिरिक्तत्वसाधिकेत्यवधेयम् ।

नचैवं सति अभावत्वप्रत्ययादित्युत्तरग्रन्थविरोधः, तयोः प्रागभावध्वंसत्वावगाहित्वादिति वाच्यम्, अभावत्वप्रत्ययादित्यस्य प्रागभावत्वध्वंसत्वावगाहिप्रत्ययादित्यर्थकत्वात् । तयोर्भावाभावसाधारणातिरिक्ताखण्डोपाधित्वाभ्युपगमे तु ध्वंसप्रागभावप्रागभावध्वंसयोरतिरिक्तत्वे लाघवस्यैव शरणीकरणीयत्वादित्यवधेयम् । प्रागभाव एव न पारमार्थिक इत्यन्ये(२) ।

(१) कंसान्तर्गतं नास्त्यादर्शे ।

(२) एवञ्च प्रागभावस्यैवाभावे ध्वंसप्रागभावप्रागभावध्वंसयोरतिरिक्तचिन्तानवसर एवेति बोध्यम् ।

प्रत्यभिज्ञायां च तत्तासंस्कार एव हेतुरिति प्राञ्चः । नच तस्याः संस्कारजन्यत्वेन स्मृतित्वापत्तिः, तज्जन्यज्ञानत्वस्य तत्र प्रयोजकत्वादिति वाच्यम्, किमिदं प्रयोजकत्वं नाम ? न व्यापकत्वम्, अविरोधात्; प्रत्यभिज्ञायाः संस्कारजन्यत्वेऽपि तथाविधव्यापकताया अक्षतेः । न व्याप्यत्वं, प्रमाणाभावात् । तथा च प्रकृते प्रयोजकत्वस्य दुर्वचत्वेन तथा वक्तुमशक्यतया प्रत्यभिज्ञायाः संस्कारजन्यत्वे न किञ्चिद्बाधकम् । परन्त्वनुद्भूतेऽभिभूते वा तत्तासंस्कारे प्रत्यभिज्ञाया अनुत्पादेन तत्तास्मृतिरेव तद्धेतुरिति मन्तव्यम् ।

पदजन्यधर्मिकोटिद्वयतदुभयविरोधज्ञानसंशयात्मकयोग्यताज्ञानसहितात् शब्दादाहत्यैव संशयः । "समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थितेश्च विशेषापेक्षो विमर्शः संशयः" ( गौ०सू० १-१-२३ ) इति सूत्रं प्रणयतो महर्षेरपि सम्मतमिदम् । एकधर्मिकनानाविरुद्धधर्मप्रकारकज्ञानत्वरूपं कोटिद्वयज्ञानसामग्रीसमाजाधीनं च संशयत्वं नीलघटत्ववन्न कार्यतावच्छेदकम् । एवं संशयत्वशून्यज्ञानत्वरूपनिश्चयत्वमपि नीलत्वशून्यघटत्ववत्तथेति दिक् ।

क्षणपदार्थश्च क्षणिकोऽतिरिक्तः कालोपाधिः ।

ननु विभागप्रागभावविशिष्टं कर्मैव तथेति चेत् ? न, उदीच्यकर्मजन्यविभागप्रागभावविशिष्टस्य कर्मणः क्षणचतुष्टयावस्थायित्वात् । तथा च क्षणचतुष्टयान्तर्भावेन तत्र क्षणव्यवहारापत्तिः । न चैवमिष्टापत्तिः, तथा सति घटप्रागभावक्षणेऽपि

घटवानिति व्यवहारापत्तेः।

ननु स्वजन्यविभागप्रागभावविशिष्टं कर्म क्षण इति चेत्तर्हि स्वत्वाननुगमादननुगमः। जाते च विभागे कुतः क्षणव्यवहारः? इदं च प्रतिक्षणं क्रियाया उत्पत्तौ मानाभाव इत्यभिप्रेत्योक्तम्। तथात्वे तु नायं दोष इति ध्येयम्।

ननु विभागपूर्वसंयोगविशिष्टात्कर्मण (१)एवेति चेत् तर्हि सुतरामननुगमः। एवं पूर्वसंयोगनाशकाले उत्तरसंयोगकालेऽपि कर्मसत्त्वे क्षणत्वं वक्तव्यम्। इदमुपलक्षणम्। पूर्वसंयोगनाशविभागोभयाविशिष्टक्रियाया अपि क्षणत्वमवसेयम् तथाचाव्याप्तिरूपदोषस्य परिहारेऽपि क्षणपदार्थाननुगमरूपदोषो दुरुद्धर इति।

नचैवं क्षणत्वमेवातिरिक्तमभ्युपेयम्, तेनैवानुगतक्षणव्यवहारानिर्वाहात्; किं क्षणपदार्थस्यातिरिक्तत्वाभ्युपगमेनेति वाच्यम्, विनिगमनाविरहेणैककालोत्पन्ननानाविधतथाविधक्रियालक्षणत्वसम्बन्धकल्पनामपेक्ष्यातिरिक्तक्षणमभ्युपेत्य तत्रैव तत्सम्बन्धकल्पनालघीयस्त्वादिति सन्तोष्टव्यम्।

ननु दशरथादीनामिदानींतनानां दशरथादिपदात्कथं शाब्दबोधः? इदानींतनानां दशरथत्वाद्विप्रकारकबोधाभावेन विशेषणग्रहाभावाद् दशरथत्वविशिष्टादौ शक्तिग्रहासम्भवेन पदजन्यदशर(२)थत्वविशिष्टपदार्थोपस्थितेरभावात्। एवं कथं वा

(१) अस्य 'क्षणव्यवहारः' इत्यनुषङ्गः।

(२) 'रथत्वाविशिष्ट' आदर्शे।

पुंसां पिशाचादिपदात्पिशाचत्वादिविशिष्टशाब्दबोधः ? पूर्वदर्शितरीत्या पदजन्यपदार्थोपस्थित्यभावादिति चेत् ?

अत्रोच्यते, अदृष्टदशरथादीनां चेदानीन्तनानां दशरथपदात् अन्येषामपि पिशाचादिपदात्केनापि रूपेण पदार्थोपस्थितिरिति अवहितैः परिभावनया निर्वाह्यमिति । तथाचायं पूर्वपक्षो दुःसमाधेयः; किन्तु भावनासमाधानकः । भावनासाध्यसमाधानं त्वेतादृक्—यत्र 'प्रमेयवान्' इत्यनुभवजन्यप्रमेयवानिति संस्कारो जातस्तदनन्तरं प्रमेयत्वांशे दोषवशाद्दशरथत्वमात्रप्रकारकस्मृतिजनकोद्बोधकवशाद्दशरथत्वप्रकारकस्मरणं, तत्र दशरथत्वविशिष्टे शक्तिग्रहसम्भवेन तज्जन्यदशरथत्वादिविशिष्टोपस्थितेः सुलभतया दशरथत्वादिप्रकारकशाब्दबोधे बाधकाभावः । एवं पिशाचादिस्थलमपि व्याख्यातम् ।

यदि च तदंशेऽन्याप्रकारकस्मृतिं प्रति तदंशेऽन्याप्रकारकसंस्कारस्य हेतुत्वमावश्यकम् । अन्यथा जातित्वरूपेण घटत्वप्रकारकसंस्कारादपि जातित्वांशे मोषदशायां घट इति स्मरणापत्तेः; तथाच कथमुपदर्शितरीत्या दशरथादिपदाद्दशरथत्वादिविशिष्टस्योपपादनं चेति विभाव्यते; तथापि यत्र दशरथत्वादिसम्बन्धेन घटादेर्भ्रमो जातस्तत्र तथाविधशक्तिग्रहोपपादनं भवत्येव । न च तस्य सम्बन्धतायां प्रमाणाभावः, संयोगादौ सम्बन्धतायुक्तेरत्रापि तौल्यात् ।

एवं स्वत्वमपि पदार्थान्तरम् । तत्तु 'चैत्रस्येदं धनम्' इत्यादिप्रतीतिविषयो धनवृत्तिचैत्रनिरूपितसम्बन्धः । स सम्बन्धो

नैयायिकानां स्वत्वत्वेन व्यवह्रियमाणं यत्तदपेक्षयाऽतिरिक्तः।

ननु यथेष्टविनियोगयोग्यत्वं तदिति चेत्? को विनियोगः? भक्षणादिकमिति चेत्? न, परकीयेऽप्यन्नादौ भक्षणसम्भवात्। तथाच तथाविधभक्षणे कृते पुरुषान्तरीयान्नादौ पुरुषान्तरस्य स्वत्वापत्तेः।

शास्त्रानिषिद्धं भक्षणं विनियोग इति परकीयान्नादिभक्षणस्य शास्त्रनिषिद्धत्वात्तद्योग्यतामादाय पुरुषान्तरस्यान्नादौ पुरुषान्तरस्य न स्वत्वापत्तिरिति चेत्? किं तच्छास्त्रम्? "परस्वं नाददीत" इत्यादिकमिति चेत्? स्वत्वाप्रतीतौ कथं तत्प्रवृत्तिः? अन्योन्याश्रयात्। इदमुपलक्षणम्। योग्यत्वस्य निर्वचनाशक्यतयाऽपि तद्घटितलक्षणमनुपपन्नमित्यपि पश्यन्तु। तस्मात् स्वत्वमतिरिक्तमेव। प्रमाणं च "परस्वं नाददीत" इत्यादिकमेव स्वत्वे।

नच यथेष्टविनियोगोपायक्रयादिविषयत्वमेव तदस्तु, किं तत्रातिरिक्तकल्पनयेति वाच्यम्, तादृशविषयताया धनस्वरूपत्वे क्रयपूर्वकालेऽपि तदीयस्वत्वव्यवहारप्रसङ्गात्। क्रयस्वरूपत्वे तु क्रयनाशक्षणे तदीयस्वत्वनाशप्रसङ्गात्। अतिरिक्तत्वे त्वस्माकं समीहितस्य सिद्धत्वादित्यलमतिप्रसक्त्या।

तच्च दानजन्यपरस्वत्वनाशानन्तरोत्पन्नस्वस्वत्वसम्पादकग्रहणरूपप्रतिग्रहेण अस्वामिकस्यारण्यस्थशाककुशादेरानयनरूपोपादानेन ग्रहणादिभिः पित्रादिमरणैश्च जन्यते; दानविक्रयादिभिर्नाश्यते। कारणानामेकशक्तिमत्त्वात्कार्यवैजात्याद्वा

कार्यकारणनिर्वाह इति दिक् ।

केचित्तु स्वत्वं नातिरिक्तम्, किन्तु क्वचिद्विक्रयप्रागभावविशिष्टः क्रयविनाशः, क्वचिद्दानादिप्रागभावविशिष्टः प्रतिग्रहादिध्वंसः, क्वचिद्विक्रयप्रागभावविशिष्टः पित्रादिध्वंसः स्वत्वम् । न चैवं सति 'स्वत्वम्' इत्याकारानुगतव्यवहारानुपपत्तिः । तत्रेष्टापत्तौ क्षतिविरहात् । अतिरिक्तस्वत्ववादिनामपि तथाविधव्यवहारोपपत्तयेऽतिरिक्तस्वत्वत्वाङ्गीकारस्यावश्यकतया मन्मतेऽप्यतिरिक्ततन्मात्राभ्युपगमेनानुगतव्यवहारसम्भवाच्च । अतिरिक्तस्वत्ववादिमते स्वत्वत्वं नातिरिच्यत इति तु नाशङ्कनीयम्, अधिकरणभेदेन स्वत्वभेदाङ्गीकारस्यावश्यकत्वात् । अन्यथा एकद्रव्यविक्रयणादिना सर्वत्र स्वत्वनाशप्रसङ्गादिति वदन्ति ।

तद्धेयम् , प्रागभावे मानाभावेन तथा वक्तुमशक्यत्वात् ।

एवं शक्तिरप्यतिरिच्यते । ननु तृणादिजन्यतावच्छेदकत्वेन वह्निनिष्ठजातित्रयं स्वीकृत्य तथाविधजातित्रयावच्छिन्नं प्रति तृणादीनां तृणत्वादिना हेतुतात्रयकल्पनेनैवोपपत्तौ किमतिरिक्तशक्तिकल्पनेनेति चेत् ? अत्रोच्यते, तृणारण्यादिस्थले जातित्रयकल्पनामपेक्ष्य तत्तत्सम्बन्धानामेकशक्तिमत्त्वेन कारणत्वकल्पनाया एव लघुत्वेन न्याय्यत्वात् । तथाच तादृशजातित्रयमभ्युपेत्य कार्यकारणभावत्रयाभ्युपगमे गौरवात् तदपेक्षयैकामतिरिक्तशक्तिमभ्युपेत्यैकशक्तिमत्त्वेन तत्रैककार्यकारणभावकल्पने लाघवस्यातिस्फुटत्वात् ।

ननु तादृशसम्बन्धत्रयेष्वेकां जातिमभ्युपेत्य तत्र तथावि-

धजातिमत्त्वेनैकहेतुताकल्पनोपपत्तौ लाघवाभावादतिरिक्तशक्ति-कल्पनमसमर्थकमिति चेत् ?

उच्यते, सम्बन्धत्रितयनिष्ठैकजात्यङ्गीकारे च नोदनत्वा-दिना सङ्करप्रसङ्गः। नोदनत्वाभाववति तादृशी जातिरभिघा-ताख्यतादृशसंयोगे। तादृशवैजात्याभाववति रथादिनोदनाख्य-संयोगे नोदनत्वजातिः। एकत्र तादृशनोदनाख्यसंयोगे च तादृशजातिद्वयसमावेशात्।

यदि चान्वयव्यतिरेकाभ्यां तृणादेरपि कारणत्वमिष्यते, तदा तेषामप्येकशक्तिमत्त्वेन तदस्तु। तथापि जातित्रयकल्पना-मपेक्ष्य शक्तिद्वयकल्पनैव लाघवेन ज्यायसीति। तेष्वपि चैक-जात्यङ्गीकारे मणित्वतेजस्त्वादिना सङ्करप्रसङ्ग इति।

अत्रेदमवधेयम्—तृणादीनामेकशक्तिमत्त्वेन हेतुत्वे फूत्का-राद्यभावदशायां वह्निरुत्पद्यताम्। न च फूत्कारादीनां सहका-रित्वमात्रं कल्प्यते, तथाप्यरणिसम्बन्धसत्त्वे ( फूत्कारसत्त्वे ) मन्थनाद्यसत्त्वे वह्न्युत्पत्त्यापत्तेः। तादृशजातित्रयमभ्युपेत्य प्रत्येकं तादृशजातित्रयावच्छिन्नं वह्निं प्रति प्रत्येकं तृणादीनां तृणत्वादि-ना हेतुतात्रयकल्पने तु नैवानुपपत्तिः। तृणत्वावच्छिन्नेन फल-जनने एव फूत्कारस्य सहकारित्वाभ्युपगमात्।

न च फूत्कारादिसम्बन्धानामप्येकशक्तिमत्त्वेनैव तत्र हेतु-त्वम्, अरणिसम्बन्धकालीनफूत्कारादिसम्बन्धे तादृशशक्त्यन-भ्युपगमेन नोपदर्शितापत्तिरिति वाच्यम्, तथा सति तृणादी-नामेकशक्तिमत्त्वेन हेतुत्वे मानाभावः, तृणादिसम्बन्धाभावांका-

लीनफूत्कारादिसम्बन्धे तादृशशक्त्यनभ्युपगममात्रेणैवापत्तिवारणसम्भवात् ।

यदि च विनिगमनाविरहेण तादृशोभयरूपेण हेतुत्वमवश्यमभ्युपेयमिति विभाव्यते, तदा तृणादिसम्बन्धकालीनवायुसंयोगादीनामप्येकशक्तिमत्त्वेन हेतुतामादाय विनिगमनाविरहो दुर्वार इति । तस्माज्जातिद्वयमभ्युपेत्य तथाविधकार्यकारणभावकल्पनमेव निराबाधसरणिमादधातीति सारम् ।

संख्या च पदार्थान्तरं, न तु गुणः, गुणादिष्वपि तद्वत्ताप्रत्ययात् । न चासौ भ्रमः, बाधकाभावात् । एकार्थसमवायप्रत्यासत्त्या तथाप्रत्यय इति चेत् ? न, विलक्षणाभ्यां समवायैकार्थसमवायाभ्यामविलक्षणायास्तद्वत्ताप्रतीतेरयोगात् । घटत्वादौ चैकार्थसमवायादेकत्वप्रत्ययवत् द्वित्वाद्येकार्थसमवायाद्द्वित्वादिप्रत्ययप्रसङ्गः । रूपत्वादौ च न तत्सम्भवः ।

समवायोऽपि च नैको जलादेर्गन्धादिमत्त्वप्रसङ्गात् । परन्तु नानैव । समवायत्वं तु पुनरनुगतमखण्डोपाधिरिति ।

वैशिष्ट्यमपि पदार्थान्तरम्, रूपादिप्रतीतिनिमित्ततया समवायस्येवाभाववत्ताप्रतीतिनिमित्ततया तस्यापि सिद्धेः । स्वरूपविशेष एव तथा प्रतीतिनिमित्तमिति चेत् ? न, समवायोच्छेदप्रसङ्गात् । तत्रापि स्वरूपसम्बन्धविशेषस्य निमित्ततायाः सुवचत्वात् । एतेन ज्ञानादिविषयतादि व्याख्यातम् ।

"नानुपमृद्य प्रादुर्भावात्" इति सूत्रम् । अनुपमृद्य प्रादुर्भावादिति तदर्थः ।

गुरूणां "न कलञ्जं भक्षयेत्" इति कलञ्जभक्षणाभावविषयकं कार्यमित्यर्थः। एतादृशोऽप्यन्वयः स्थलविशेषे व्युत्पत्तिसिद्ध इति मन्तव्यम्।

कारणत्वं च पदार्थान्तरम्। तच्च कार्यभेदादवच्छेदकभेदाच्च भिद्यते। कारणत्वत्वेनाखण्डोपाधिनाऽनुगतं च तत् कारणपदशक्यतावच्छेदकम्। (१)ग्राहकं च तस्यान्वयव्यतिरेकदर्शनसहकृतं प्रत्यक्षम्, क्वचिदनुमानं, क्वचिच्चागमादिकम्। एतेन कार्यत्वं व्याख्यातम्। कारणत्वप्रतियोगित्वमेव कार्यत्वमिति चेत्? कार्यत्वप्रतियोगित्वमेव कारणत्वमिति किं न रोचयेत्। तस्मात्कार्यत्वं कारणत्वं चोभयमतिरिक्तं भिन्नमेवेति कृतं पल्लवितेन।

वस्तुतस्तु द्रव्यगुणकर्मधर्माश्चत्वार एव भावपदार्थाः। द्रव्यं तु श्रुतिसम्मतं पृथिव्यादि नवैव। गुणास्तु एकोनविंशतिप्रकाराः। कर्म गमनाख्यमेव। धर्मास्तु कारणत्वादयः। द्रव्ये गुणादीनां सम्बन्धस्तु स्वरूपरूपत्वेन तत्स्वरूपेऽन्तर्भूत इति यथायथं लाघवगौरवाभ्यां श्रुतिसूत्राविरोधेन विचार्य पदार्था ऊहनीयाः। अस्माकमिव गौडशिरोमणेरप्ययमेव पन्था ऊह्यः। अन्यथा सर्वपदार्थापलापे वैतण्डिकत्वं सिध्येदिति सन्तोष्टव्यं सुधीभिः।

श्रुतिसूत्रविरुद्धानां खण्डनं स्वीकरोम्यहम्।
मण्डनं त्वविरुद्धानां पदार्थानां (२)मतं मम॥ १॥

---

(१) 'ग्राहकत्वम्' आदर्शे। (२) 'सम्मतं' आदर्शे।

अनीश्वराः समाद्रष्टुं केवलं मूलटिप्पणम् ।
तेषामनुग्रहायैव सङ्ग्रहोऽयं मया कृतः ॥ २ ॥

इति श्रीकृष्णचरणचञ्चरीकदासपण्डितवेणीदत्तसङ्गृहीते
पदार्थमण्डने प्रथमः प्रभावः ।



समाप्तोऽयं ग्रन्थः ॥



इन्दुबाणोदधिब्रह्मसंवत्सरमहोदये ।
ग्रन्थः समाप्तिमगमद्भाद्रशुक्ले हरेर्दिने ॥ १ ॥

भाद्रशुक्ल ११ सं० १७५१



## ABREIVIATIONS.

| | | |
|---|---|---|
| सर्वो. सा. | .... .... .... | सर्वोपनिषत्सार |
| गौ. सू. | .... .... .... | गौतमसूत्र (न्यायदर्शन) |
| तै. | .... .... .... .... | तैत्तिरीयोपनिषत् |
| क० उ० | .... .... .... | कठोपनिषत् |
| मु. उ. | .... .... .... | मुण्डकोपनिषत् |
| पा. सू. | .... .... .... | पाणिनीयाष्टाध्यायीसूत्र |

* श्रीगुरुः शरणम् *

# पदार्थमण्डनविषयसूचीपत्रम् ।

शुभं भूयात ।

---

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1–12

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1–12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2–0

No. 5—The Rasasāra, a Commentray on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–2

No. 6—(Part I)–The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–12

No. 6–(Part II)—Ditto Ditto Rs. 0–12

No. 7–(Part I)–The Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–8

No 7—( Part II ) Ditto Ditto Rs. 1–4

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagnnātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–10

No. 9—(Part I)-The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-14

No. 15-( Part-II )—Do. Do. Rs. 2-4

No. 15-( Part III )—Do. Do. Rs. 2-0

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hosing Sāhityopādhyāya. Rs. 1-2

No. 17-Tho Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs 0-14

No. 18–(Part I)–The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2–4.

No. 19–( Part.II ) Ditto Ditto Rs. 2–12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–2

No. 21–( Part–II ) Ditto Ditto Rs. 2–0

No. 22–The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares.

No. 23–Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra–S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrīt College, Benares.

No. 24–The S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.
Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3-12

No. 25–The Sāpiṇḍyakalpalatikā by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs 1-4.

No. 26–The Mṛgāṅkalekhā Nāṭikā by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa Sāstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27–The Vidvachcharita Pañchakam By Nārāyaṇa S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Library, Sarasvati Bhavana, Benares. With an Introduction by Gopināth Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs 2-0

No. 28–The Vrata Kos'a by Jagannātha S'āstri Hosiṅgā Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs 4-0

No. 29–The Vṛitti dīpikā By Mauni S'rī Kṛṣna Bhatta.
Edited with Introduction etc. by Pt. Gangadhara S'astri Bharadvaja Professor, Govt. Sanskrit College Benares.

No. 30–The Padārtha Maṇḍanam By S'rī Veṇīdatta.
Edited with Introduction etc by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares.

No. 31 ( Part I)–The Tantraratna by Pârtha Sarathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University, Allahabad.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1) : its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgānātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅga-natha Jha.

(b) History and Bibliography of Nyaya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśakhya, by Kaṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmakara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkaryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans. by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśakhyas, by Maṅgala Deva S'astri.

(e) Formal Training and the Ancient Indian Thought, by G.L Sinha.

(f) History and Bibliography of Nyaya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Ramayaṇa, by Kanmatha nāth Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares) by Gopinātha Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhamaha and his Kavyalankara, by Batukanatha S'arma and Baladeva Upadhyaya.

(b) Some variants in the readings of the Vais'eṣika Sutras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the Correct meaning of some obscure Vedic words, by Sitāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayana, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the term of Parārdha, by Umes'a Mis'ra.

Vol. VIII. ( In Progress )

To be had of
The Superintendent
Government Press, U. P.
Allahabad

